# अभिनवा पाठावलिः

प्रथमा

‘ मास्तर ऑफ् आर्त ’ इति ‘ सेकंडरी ट्रेनिंग कॉलेज डिप्लोमा ’ इति च
उपपदद्वयसमलङ्कृतेन मुंबापुरस्थ–‘ सेकंडरी-ट्रेनिंग-कॉलेजा ’भिधे
राजकीयविद्यापीठे प्रधानसंस्कृताध्यापकपदधारिणा
**वोकीलकुलोत्पन्नेन पांडुरंगसूनुना विनायकशर्मणा**
विरचिता

**मॅक्मिलन् ॲण्ड कंपनी, लिमिटेड,**
इति प्रथितया श्रेण्या प्रकाशिता



१९३७

मूल्यमष्टाणकाः

# अभिनवा पाठावलिः

## प्रथमा

Abhinavâ Pâṭhâvali

Vol. I.

‘ मास्तर ऑफ् आर्त ’ इति ‘ सेकंडरी ट्रेनिंग कॉलेज डिप्लोमा ’ इति च
उपपदद्वयसमलङ्कृतेन मुंबापुरस्थ–सेकंडरी-ट्रेनिंग-कॉलेजाभिधे
राजकीयविद्यापीठे प्रधानसंस्कृताध्यापकपदधारिणा
**बोकील**कुलोत्पन्नेन **पांडुरंग**सूनुना **विनायक**शर्मणा
विरचिता

**मॅक्मिलन् ॲण्ड कंपनी, लिमिटेड,**
इति प्रथितया श्रेण्या प्रकाशिता



[ मूल्यमष्टाणकाः

# PREFACE

About three years ago an experiment was started to teach Sanskrit by the Conversational Method in the Elphinstone High School, Bombay. A class of the third standard was selected for it, and a course of lessons on simple, concrete topics was outlined; care being taken to introduce new words and phrases in proper gradation. No text-book was available to suit the purpose and hence special lessons had to be written. This experiment proved fairly successful. Many educationists liked the lessons given before the educational conferences at Bombay in 1926 and 1928 and at Dharwar in 1927, and others expressed their satisfaction on their visits to the class at work. The pupils have also been showing such good progress that on one occasion they wrote better stories in Sanskrit than the sixth standard boys taught by the old method. Naturally it was thought worth while to put the lessons together and publish them in the form of this Reader.

It may be desirable to show here in brief the line of this teaching. Each lesson is taught first orally with the help of the necessary concrete illustrations. Each new word or phrase is first introduced by the teacher, and the class repeats it after him both simultaneously and individually. Sufficient attention is paid to pupils' pronunciation. Here the Shastri method is followed and the new words are *thoroughly drilled*. As far as possible the work goes on in Sanskrit; but occasionally explanations are given in the vernacular. The teacher does not rigidly refrain from using the vernacular and must remember that the pupils' understanding is his chief aim. These lessons are found to interest the boys quite well and they seem to take pleasure in speaking Sanskrit. Though it is not the aim to prepare them to

speak this language, this conversational method is used just to make its study palatable to them and to erase the general impression that Sanskrit is very difficult to learn.

After this oral work the teacher reads the lesson twice or thrice and the class repeats it after him in chorus. Reading is an art and pupils are thoroughly trained in it. *Intelligent reading* includes right pronunciation and proper intonation, and is justly considered to be the index to successful language-study. Sanskrit reading has been totally neglected for the last sixty years in our Secondary schools; because there could be no reading ( worth the name ) of disconnected sentences as given in Dr. Bhandarkar's books and in similar other books. *Connected descriptions, dialogues* and *stories* form, therefore, the outstanding feature of this New Sanskrit Reader. Let the Sanskrit teacher remember how beautifully the old Shastris read and recite classical passages or Vedic hymns and let him pay sufficient attention to his pupils' reading. As much attention is, therefore, paid to good reading as to conversation.

Then the teacher asks a few questions on the subject-matter, or gets the class to solve some interesting exercises, examples of which will be found, in this book, at the end of each lesson. Boys generally seem to like "physical drill", "the filling of gaps", "dramatisation", and "correcting the order of sentences" better than others. Class-games are still more interesting. When this is done the class write down a part of the lesson in their own note-books and draw the necessary pictures to illustrate it. Such written work either at school or at home is very useful; because it helps to perfect the knowledge already gained.

Grammar has its own place in the Conversational method, but it does not precede literature, nor does it become an end in itself. Grammar is not taught in the Third Standard which is the First year in Sanskrit. But those who begin to teach

Sanskrit in the Fourth Standard should begin to teach Sanskrit grammar in the second term or even by the middle of the first term. Grammar lessons are always based on the literature already done by the class, and here Dr. Bhandarkar's Book I serves as a guide to the teacher. The inductive method is followed in them as far as possible, as indicated by the exercises for *sandhis* used in this book, and explanations are given in the vernacular. The pupils are not required to learn by heart the abstract rules, but the concrete forms which are the working units of the language.

The teacher tries his best to create a natural atmosphere for the lesson. For instance, when he has to talk of a garden, or of a play-ground, he takes his class out into the school garden or the play-ground, and gives the lesson there. Dialogues are actually spoken first by the teacher and his assistant and then by the class. Pictures and diagrams may be used successfully in lessons where the natural environment is impossible (e. g. the Ashrama, the Sage, the fire-place, etc.)

Poetry teaching requires that the necessary tunes and accompaniments should be used. The class must, of course, understand the poem presented, and having got so far they may then be taught to sing and learn it by heart.

This is, in brief, the method of teaching Sanskrit followed in this book, and it is hoped that it will be helpful to teachers of this subject. Those who have gone through the course of training are expected to follow it, while others who have not, may use the Translation method, adding a little conversation to it. This Reader admits of both methods of treatment. The Translation method, though not so good as the Direct method, is after all not so bad as the Grammar method in which the abstract rules of grammar are taught at the outset. It is also hoped that the lessons in this Reader will prove as interesting to

the pupils in other Secondary Schools in India as to their brothers in the Elphinstone High School, Bombay.

My heart-felt thanks are due to Principal H. R. Hamley who gave me the necessary inspiration and encouragement in this work and to Professor A. B. Gajendragadkar, Pandit Rangacharya Raddi and Vedantwagish Pathak Shastri who kindly read the manuscript and made useful suggestions. I must also thank the authors of those various books in Sanskrit and English to which, time and again, I have had to refer.

V. P. BOKIL

Bombay, November, 1927

## PREFACE TO THE SECOND EDITION

This edition has been thoroughly revised and the mistakes that had crept into the first edition have been corrected.

April, 1929 V. P. BOKIL

## PREFACE TO THE SEVENTH EDITION

In this edition the new words to be learnt in each lesson are separately shown and some more details are given regarding the conjugation of roots.

Grand High School,
Dhulia.
22nd August 1937.

V. P. BOKIL

# अनुक्रमणिका

# वर्णमाला

**स्वराः—**

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| ह्रस्वाः | अ | इ | उ | ऋ | ऌ | | | |
| दीर्घाः | आ | ई | ऊ | ॠ | ए | ऐ | ओ | औ |

विसर्गः— : ।

अनुस्वारः— ं ।

**व्यञ्जनानि—**

| | कठोराणि | | मृदूनि | | अनुनासिकानि |
|---|---|---|---|---|---|
| क–वर्गः | क् | ख् | ग् | घ् | ङ् |
| च–वर्गः | च् | छ् | ज् | झ् | ञ् |
| ट–वर्गः | ट् | ठ् | ड् | ढ् | ण् |
| त–वर्गः | त् | थ् | द् | ध् | न् |
| प–वर्गः | प् | फ् | ब् | भ् | म् |
| अन्तस्थाः–वर्णाः | | य् | र् | ल् | व् |
| ऊष्म–वर्णाः–श्, ष्, स्, | | ह् | | | |

| संयुक्तव्यञ्जनानि | |
|---|---|
| क्+क्=क्क् | क्+त्=क्त् |
| क्+र्=क्र् | क्+व्=क्व् |
| र्+ख्=र्ख् | ग्+ल्=ग्ल् |
| घ्+र्=घ्र् | ङ्+ग्=ङ्ग् |
| च्+च्=च्च् | र्+ज्=र्ज् |
| ञ्+झ्=ञ्झ् | ट्+र्=ट्र् |
| त्+य्=त्य् | स्+थ्=स्थ् |
| द्+व्= द्व् | ध्+न्=ध्न् |
| प्+ल्=प्ल् | ह्+व्=ह्व् |

(इत्यादीनि)

**स्वरव्यञ्जनयोर्मेलनम्—**

| | | | | |
|---|---|---|---|---|
| क्+अ=क<br>क्+आ=का | क्+इ=कि<br>क्+ई=की | क्+उ=कु<br>क्+ऊ=कू | क्+ऋ=कृ<br>क्+ॠ=कॄ | क्+ऌ=कॢ |
| क्+ए=के<br>क्+ऐ=कै | क्+ओ=को<br>क्+औ=कौ | | | |

[In the same way with other consonants]

# प्रथमः पाठः ।

## परिचिताः क्रियाः ।

श्रीगणेशम् अहं नमामि । आचार्यान् अहं नमामि ।
श्रीगणेशं त्वं नमसि । आचार्यान् त्वं नमसि ।
अयं बालः श्रीगणेशं नमति । आचार्यान् अयं नमति ।
एतद् मम आसनम् । अहम् अत्र उपविशामि ।
एतद् तव आसनम् । त्वम् अत्र उपविशसि ।
इदम् अस्य आसनम् । अयं बालः अत्र उपविशति ।
आसनात् अहम् उत्तिष्ठामि । भूमौ अहं तिष्ठामि ।
आसनात् त्वम् उत्तिष्ठसि । भूमौ त्वं तिष्ठसि ।
आसनात् अयं बालः उत्तिष्ठति । भूमौ अयं तिष्ठति ।
अहं द्वारं प्रति गच्छामि । अहं द्वारं प्रति धावामि ।

त्वं द्वारं प्रति गच्छसि । त्वं द्वारं प्रति धावसि ।
अयं बालः द्वारं प्रति गच्छति । अयं द्वारं प्रति धावति ।
पुनः अहम् आसने उपविशामि ।
पुनः त्वम् आसने उपविशसि ।
पुनः अयं बालः आसने उपविशति ।

---

आचार्यः । भूमिः । आसनम् । द्वारम् । नमति । गच्छति । उपविशति । उत्तिष्ठति ।

**प्रश्नाः**—किं करोमि अहम् ? किं करोषि त्वम् ? किं करोति बालः ? कुत्र उपविशामि अहम् ? कुत्र तिष्ठसि त्वम् ? कं देवं बालः नमति ? किम् आसनम् आचार्याणाम् ? किम् अस्य आसनम् ? कुत्र धावसि त्वम् ? कः भूमौ तिष्ठति ? कः आसनात् उत्तिष्ठति ?

**लेखनम्**—आसनात् अहम् उत्तिष्ठामि । अयं बालः द्वारं प्रति गच्छति ।
त्वं श्रीगणेशं नमसि । आचार्याः आसने उपविशन्ति ।

**व्यायामः**—अहम् आसनात् उत्तिष्ठामि । अहम् आसने उपविशामि ।
अहं धावामि । अहं नमामि ।

**पठनम्**—विद्याधीशं श्रीगणनाथम् । मूषकयानं गौरीतनयम् ॥
वन्दे देवं सिन्धुरवदनम् । मङ्गलरूपं भक्ताधीनम् ॥ १ ॥

नमामि देवं गणनायकं सदा । भजामि पुष्पैः सततं विनायकम् ॥
पठामि नामानि गजाननस्य । स्मरामि हेरम्बमुखं सुमङ्गलम् ॥ २ ॥

ज्ञानदाता गुरुः साक्षात् । तं नमामि दयानिधिम् ॥
देवीं सरस्वतीं चैव । वन्देऽहं हृदयस्थिताम् ॥ ३ ॥

गणेशस्य सर्वाणि नामानि कथयत ।

---

# द्वितीयः पाठः ।

## शरीरस्य अङ्गानि ।

एषः मम हस्तः । एतौ मम हस्तौ । अहं हस्तौ क्षालयामि । अहं हस्तौ दर्शयामि । अहं हस्तेन लिखामि । अहं हस्ताभ्यां नमामि ।

एषः तव हस्तः । एतौ तव हस्तौ । त्वं हस्तौ क्षालयसि । त्वं हस्तौ दर्शयसि । त्वं हस्तेन लिखसि । त्वं हस्ताभ्यां नमसि ।

अयम् अस्य हस्तः । इमौ अस्य हस्तौ । अयं बालः हस्तौ क्षालयति । अयं हस्तौ दर्शयति । अयं बालः हस्तेन लिखति । अयं हस्ताभ्यां नमति ।

एषः मम पादः । एतौ मम पादौ । अहं पादौ क्षालयामि । अहं पादौ दर्शयामि । अहं पादाभ्यां चरामि धावामि च ।

एषः तव पादः । एतौ तव पादौ । त्वं पादौ क्षालयसि । त्वं पादौ दर्शयसि । त्वं पादाभ्यां चरसि धावसि च ।

अयम् अस्य पादः । इमौ अस्य पादौ । अयं बालः पादौ क्षालयति । अयं पादौ दर्शयति । अयं बालः पादाभ्यां चरति धावति च ।

एषः मम कर्णः । एतौ मम कर्णौ । अहं मम कर्णौ दर्शयामि । अहं कर्णाभ्यां गानं शृणोमि ।

**एषः तव कर्णः। एतौ तव कर्णौ। त्वं स्वीयौ कर्णौ दर्शयसि। त्वं कर्णाभ्यां गानं कथां वा शृणोषि।**

**अयम् अस्य कर्णः। इमौ अस्य कर्णौ। अयं बालः स्वीयौ कर्णौ दर्शयति। अयं बालः कर्णाभ्यां गानं कथां भाषणं वा शृणोति।**

---

हस्तः। पादः। कर्णः। गानम्। कथा। भाषणम्। क्षालयति। दर्शयति। लिखति। शृणोति।

**प्रश्नाः**—कति हस्ताः तव ? कति कर्णाः अस्य ? दर्शय तव पादौ। किं करोमि अहं हस्तेन ? किं करोति अयं कर्णेन ? किं शृणोषि त्वं कर्णेन ? कथं धावति अयं बालः ? कः गानं शृणोति ? किं क्षालयति अयम् ?

**लेखनम्**—त्वं कर्णाभ्यां गानं शृणोषि। अयं पादौ क्षालयति दर्शयति च।

**व्यायामः**—एतौ मम हस्तौ। अहं हस्ताभ्यां नमामि। एतौ मम पादौ। अहं पादाभ्यां चरामि धावामि च। एतौ मम कर्णौ। अहं कर्णौ दर्शयामि।

**पठनम्**:—प्रथमः छात्रगणः—भो भो बालाः संस्कृतभाषा। सुलभा किं वा दुर्बोधा वा॥
एतत्कथयत कृपया यूयम्। शान्तं येन भवेन्मम चित्तम्॥ १॥

द्वितीयः छात्रगणः—
सुलभा सुलभा न च दुर्बोधा। बाला, एवंविधिना पठिता॥
सम्यक् पठिता आर्यैः पूर्वम्। श्रवणं पठनं गुरुमुखमूलम्॥२॥

---

# तृतीयः पाठः।

## शरीरस्य अङ्गानि।

**एतद् मम नेत्रम्। एते मम नेत्रे। अहं हस्तेन नेत्रे स्पृशामि दर्शयामि च। अहं नेत्राभ्यां पश्यामि।**

**एतद् तव नेत्रम्। एते तव नेत्रे। त्वं हस्तेन नेत्रे स्पृशसि दर्शयसि च। त्वं नेत्राभ्यां पश्यसि।**

इदम् अस्य नेत्रम् । इमे अस्य नेत्रे । अयं कुमारः हस्तेन नेत्रे स्पृशति दर्शयति च । अयं कुमारः नेत्राभ्यां पश्यति ।

एतद् मम मुखम् । एतद् तव मुखम् । इदम् अस्य मुखम् । अहं मुखेन वदामि-अन्नं भक्षयामि-जलं च पिबामि । त्वं मुखेन वदसि-अन्नं भक्षयसि-जलं च पिबसि । अयं बालः मुखेन वदति-अन्नं भक्षयति-जलं च पिबति ।

एषा मम नासिका । एषा तव नासिका । इयम् अस्य नासिका । अहं नासिकया श्वसिमि । त्वं नासिकया श्वसिषि । अयं बालः नासिकया श्वसिति । अहं नासिकया गन्धं जिघ्रामि । त्वं नासिकया गन्धं जिघ्रसि । अयं कुमारः नासिकया गन्धं जिघ्रति ।

— —

नेत्रम् । मुखम् । जलम् । नासिका । गन्धः । स्पृशति । पश्यति । पिबति । श्वसिति । जिघ्रति ।

**प्रश्नाः**—कति नेत्राणि मम ? कथं स्पृशति अयं नेत्रम् ? किं दर्शयसि त्वं हस्तेन ? मुखेन किं करोमि अहम् ? कथं श्वसिति अयम् ? दर्शय तव नासिकाम् । किं जिघ्रसि त्वं नासिकया ? कः जलं पिबति ? कः नेत्राभ्यां पश्यति ?

**लेखनम्**—त्वं हस्तेन नेत्रे स्पृशसि । अहं मुखेन अन्नं भक्षयामि ।
अयं बालः नासिकया श्वसिति गन्धं च जिघ्रति ।

**व्यायामः**—एते मम नेत्रे । अहं नेत्रे दर्शयामि ।
एतद् मम मुखम् । एषा मम नासिका ।
एतद् मम दक्षिणं नेत्रम् । एतद् वामं नेत्रम् ।
एषः मम दक्षिणः हस्तः । एषः वामः हस्तः ।

**पठनम्**—हस्तौ च पादौ नयने प्रसन्ने । कर्णौ सुतीक्ष्णौ वदनं च कान्तम् ॥
नासा सुरम्या मननाय चित्तम् । ईशेन दत्तं तदिदं समग्रम् ॥ १ ॥
क्रीडामि धावामि पठामि नित्यम् । पश्यामि जिघ्रामि शृणोमि शुद्धम् ॥
रात्रौ लभे चाथ सुखेन निद्राम् । ईशस्य कारुण्यमिदं समग्रम् ॥ २ ॥

---

# चतुर्थः पाठः ।

## मम पुस्तकम् ।

एतद् मम पुस्तकम् । एतद् मम पत्रम् । एषा मम लेखनी । एतद् पुस्तकम् अहं पठामि । अस्मिन् पत्रे लेखन्या अहं लिखामि ।

एतद् तव पुस्तकम् । एतद् तव पत्रम् । एषा तव लेखनी । एतद् पुस्तकं त्वं पठसि । एतस्मिन् पत्रे लेखन्या त्वं लिखसि ।

इदम् अस्य पुस्तकम् । इदम् अस्य पत्रम् । इयम् अस्य लेखनी । अयं बालः इदं पुस्तकं पठति । अस्मिन् पत्रे लेखन्या अयं लिखति ।

रम्यम् एतद् पुस्तकम् । रम्याणि एतानि सर्वाणि पुस्तकानि ।

अहो सौन्दर्यम् एतस्य चित्रस्य । अस्मिन् पुस्तके बहूनि

**रम्याणि चित्राणि सन्ति । एतानि अहं पश्यामि । एतानि चित्राणि चित्तम् आह्लादयन्ति ।**

**मनोहरा मधुरा च संस्कृता भाषा । एषा एव अस्माकं पूर्वजानाम् आर्याणां सुलभा शोभना च वाणी ।**

**अहो परमं मम भाग्यम् । संस्कृतस्य पठनं मम प्रीतये भवति ।**

पत्रम् । लेखनी । चित्रम् । चित्तम् । भाग्यम् । वाणी । रम्यम् । मनोहरा । मधुरा । सुलभा । शोभना । परमम् । पठति । भवति । आह्लादयति । विभूषयति ।

**प्रश्नाः**—कस्य इदं पुस्तकम् ? कस्य एषा लेखनी ? किं पठामि अहम् ? कुत्र लिखसि त्वम् ? कथं लिखति अयम् ? कीदृशं तव पुस्तकम् ? किम् अस्ति अस्मिन् पुस्तके ? कीदृशानि एतानि चित्राणि ? केषाम् एषा संस्कृतभाषा ?

**लेखनम्**—अस्मिन् पत्रे लेखन्या अयं लिखति ।
अस्माकं पूर्वजानाम् आर्याणाम् एषा संस्कृतभाषा ।
एतानि चित्राणि मम चित्तम् आह्लादयन्ति ।

**व्यायामः**—दक्षिणं भुजम् उद्धरामि । वामं भुजम् उद्धरामि । उभौ भुजौ उद्धरामि ।

**पठनम्**—केयूरा न विभूषयन्ति पुरुषं हारा न चन्द्रोज्ज्वला
न स्नानं न विलेपनं न कुसुमं नालङ्कृता मूर्धजाः ।
वाण्येका समलङ्करोति पुरुषं या संस्कृता धार्यते
क्षीयन्ते खलु भूषणानि सततं वाग्भूषणं भूषणम् ॥ १ ॥
येषां न विद्या न तपो न दानं ज्ञानं न शीलं न गुणो न धर्मः ।
ते मृत्युलोके भुवि भारभूता मनुष्यरूपेण मृगाश्चरन्ति ॥ २ ॥

**वाक्यरचना**—क्रमशः वाक्यानि रचयत ।

हस्तेन–नेत्रेण–पादाभ्याम्–
कर्णेन–नासिकया–मुखेन

श्वसिति–धावसि–पिबामि–
पश्यसि–लिखामि–शृणोमि ।

# पञ्चमः पाठः ।

## पाठशाला ।

एषा मम पाठशाला । अतीव रमणीया इयं शाला । अहम् अत्र आगच्छामि प्रतिदिनं पठामि च पाठान् । एते सर्वे मम वयस्याः अपि अत्र आगच्छन्ति प्रतिदिनं पठन्ति च पाठान् । अस्यां पाठशालायां वयं सर्वे विद्यार्जनं कुर्मः । तस्मात् एषा पाठशाला अस्माकं मातृवत् बहुमान्या भवति । अहो कल्याणं पाठशालायाः दर्शनम् । शालायै नमः ।

एते अस्माकं गुरवः । एते अस्मान् सम्यक् अध्यापयन्ति विविधान् विषयान् । पण्डिताः सुशीलाः च अस्माकम् आचार्याः । अतः एव एते अस्माकं पूज्याः । वयं प्रतिदिनम् एतान् नमामः । एते अस्मासु स्निह्यन्ति । सर्वेषु छात्रेषु एते स्निह्यन्ति । अहो पुण्यं गुरुचरणानां दर्शनम् । गुरुभ्यो नमः ।

---

पाठशाला । वयस्यः । गुरुः । छात्रः । रमणीया । कल्याणम् । सुशीलः । पूज्यः । प्रतिदिनम् । सम्यक् । तस्मात् । आगच्छति । रोचते । स्निह्यति । अध्यापयति ।

**प्रश्नाः**—कस्य एषा पाठशाला ? कः अत्र आगच्छति ? किं करोमि अहं पाठशालायाम् ? कीदृशं पाठशालायाः दर्शनम् ? के त्वाम् अध्यापयन्ति ? कीदृशाः तव आचार्याः ? कस्मिन् स्निह्यन्ति गुरवः ?

**लेखनम्**—एषा मम पाठशाला मातृवत् बहुमान्या भवति । सर्वेषु छात्रेषु गुरवः स्निह्यन्ति । अहो पुण्यं गुरुचरणानां दर्शनम् ।

**व्यायामः**—दक्षिणं भुजं अहं प्रसारयामि । वामं भुजं अहं प्रसारयामि । उभौ भुजौ अहं प्रसारयामि ।

**पठनम्**—रम्या मदीया खलु पाठशाला । नितान्तमेषा भुवि रोचते मे ॥
वाग्देवतायाः खलु मूर्तिरेषा । मातेव चित्तं मम तोषयन्ती ॥ १ ॥

**वाक्यरचना**—क्रमशः वाक्यानि रचयत ।

पाठशालाम्–चित्रम्–गुरुम्–
छात्रान्–कथाम्–पाठम्

पठति–शृणोषि–गच्छन्ति ।
पश्यामि–नमति–अध्यापयन्ति ।

---

# षष्ठः पाठः ।

## उद्यानं क्रीडाङ्गणं च ।

शालागृहस्य पुरतः एतद् उद्यानम् । एतद् अतीव आह्लादकं भवति । बहवः वृक्षाः अत्र रोहन्ति । तान् मालाकारः प्रतिदिनं जलेन सिञ्चति । केचित् वृक्षाः लघवः । अन्ये च तुङ्गाः सन्ति । लताः अपि अत्र रोहन्ति । अस्मिन् स्थाने बहूनि कुसुमानि सन्ति । तेषां कानिचित् रक्तानि, कतिपयानि श्वेतानि, कानि-चित् पीतानि, कतिचित् नीलानि, अन्यानि च चित्रितानि वर्तन्ते । अहो सौन्दर्यं पुष्पाणाम् । तेषां गन्धः अपि अतीव

मधुरः । रम्यम् एतद् स्थलम् । अत्र सन्ध्याकाले गुरवः छात्राः च विश्रान्तिसुखम् अनुभवन्ति ।

शालागृहस्य पश्चिमतः एतद् अस्माकं क्रीडाङ्गणम् । अत्र वयं सन्ध्याकाले कन्दुकेन क्रीडामः । एतद् क्रीडाङ्गणं विशालं वर्तते । सर्वे कुमाराः अत्र धावनं, खेलनम्, उत्पतनम्, इत्यादिभिः प्रकारैः व्यायामं कुर्वन्ति । तेन तेषाम् आयुः आरोग्यं च वर्धेते । गुरवः अपि क्रीडन्ति अस्माभिः सह । अहो धन्यम् अस्माकं छात्रकुलम् । गुरूणां समागमेन एषा विद्यार्थिदशा सर्वेषां कल्याणाय भवति ।

उद्यानम् । वृक्षः । लता । कुसुमम् । मालाकारः । क्रीडाङ्गणम् । कन्दुकः । आयुः । छात्रकुलम् । समागमः । आह्लादकम् । लघुः । तुङ्गः । विशालम् । धन्यम् । रोहति । सिञ्चति । वर्तते । वर्धते । क्रीडति ।

**प्रश्नाः**—कुत्र वर्तते उद्यानम् ? किम् अस्ति अस्मिन् उद्याने ? कति वृक्षाः सन्ति अत्र ? कः एतान् वृक्षान् सिञ्चति ? कीदृशाः वर्णाः कुसुमानाम् ? कीदृशः गन्धः कुसुमानाम् ? कुत्र वर्तते क्रीडाङ्गणम् ? कथं खेलन्ति कुमाराः तत्र ?

**लेखनम्**—अस्मिन् उद्याने गुरवः छात्राः च विश्रान्तिसुखम् अनुभवन्ति ।
क्रीडाङ्गणे सर्वे कुमाराः विविधैः प्रकारैः क्रीडन्ति ।

**व्यायामः**—( भुजप्रसारणम् ) पुरतः । पार्श्वतः । उर्ध्वम् । पश्चिमतः ।

**पठनम्**—उद्यानमेतद्बहु शोभतेऽत्र । विभान्ति वृक्षाः फलपुष्पभारैः ॥
गन्धं च तेषां पवनो विभर्ति । तेनैव चित्तं मम तोषमेति ॥ १ ॥

वर्णो विचित्रः कुसुमस्य रम्यः । श्वेतश्च नीलो हरितश्च पीतः ॥
छाया घना वृक्षफलं च रम्यम् । तेनैव चित्तं मम तोषमेति ॥ २ ॥

क्रीडाङ्गणं मे विततं सुशोभि । दूर्वाङ्कुरैर्व्याप्तमिदं विचित्रम् ॥
किर्मीरवर्णं खलु वस्त्रमेतद् । शालागृहं भूषयतीति मन्ये ॥ ३ ॥

खेलन्ति बाला दिनशेषभागे । क्रीडाङ्गणेऽस्मिन् विविधैर्विलासैः ॥
पुष्यन्ति गात्राणि ततश्च तेषां । परं विनीतत्वमतो लभन्ते ॥ ४ ॥

**स्थलनिर्देशः**—आसनम्–कन्दुकः–पुष्पाणि–चित्रम्–रज्जुः–लताः–द्वारम्–वृक्षाः–क्रीडा–चक्रम् । ( कुत्र वर्तन्ते एते पदार्थाः ) उद्याने ॥ पाठशालायाम् ॥ क्रीडाङ्गणे ।

# सप्तमः पाठः ।

## आश्रमः ।

एषः मुनेः आश्रमः । अस्य समन्तात् बहवः वृक्षाः सन्ति । वृक्षाणां पर्णानि हरितानि । पुष्पाणि फलानि च तरूणां भूषणानि भवन्ति । आश्रमस्य पुरतः काचित् नदी वहति । समीपे एव कश्चित् गिरिः वर्तते । अस्मात् पर्वतात् एषा नदी उद्भवति । अस्याः जलं निर्मलं मधुरं च वर्तते ।

मुनेः कुमारः प्रभाते उत्तिष्ठति नदीं च गच्छति । तत्र अयं मुखमार्जनं स्नानं च करोति । नद्याः तटे अयम् उपविशति सूर्यं च नमति । अनन्तरं एष बालः आश्रमं प्रत्यागच्छति अग्निं पूजयति वेदान् पठति च ।

अहो शान्तम् एतद् आश्रमपदम् । वृक्षेषु खगाः मधुरं कूजन्ति । मुनेः धेनुः वने चरति तृणं च खादति । धेनोः वत्साः इतस्ततः धावन्ति । सर्वे जनाः पशवः खगाः च सन्तुष्टाः अत्र वसन्ति । अहो धन्यः अयं मुनिः, यस्य आश्रमः एतादृशः प्रशान्तः रमणीयः च वर्तते ।

---

आश्रमः । वेदाः । गिरिः । मुनिः । नदी । धेनुः । खगः । समन्तात् । समीपे । प्रभाते । अनन्तरम् । इतस्ततः । वहति । पूजयति । कूजति । वसति । खादति ।

**प्रश्नाः**—किम् एतद् स्थानम् ? कस्य एषः आश्रमः ? किम् अस्ति आश्रमस्य समीपे ? कुतः उद्भवति इयं नदी ? कस्य कुमारः एषः ? किमर्थं अयं नदीतीरं गच्छति ? कदा च सूर्यं नमति ? कीदृशम् एतद् आश्रमपदम् ?

**लेखनम्**—अस्मात् पर्वतात् एषा नदी उद्भवति । अयं बालः आश्रमं प्रत्यागच्छति अग्निं पूजयति वेदान् पठति च ।

**व्यायामः**—अहं दक्षिणं भुजम् भ्रामयामि । वामं भुजम् भ्रामयामि । अहम् उभौ भुजौ भ्रामयामि । अवनमामि अहं पुरतः–पृष्ठतः ।

**पठनम्**—शान्तमिदमाश्रमपदं चरति च धेनुः खगाश्च कूजन्ति ।
बालः सूर्यं नमति प्रभातकाले नदीतटे विमले ॥ १ ॥

शान्तमिदमाश्रमपदं स्वैरं धावन्ति हरिणका वत्साः ।
वेदान् पठन्ति बालास्तानपि शुकसारिका अनुपठन्ति ॥ २ ॥

शान्तमिदमाश्रमपदं यज्ञं कुर्वन्ति मुनिवरा नित्यम् ।
धूमो घृतस्य गन्धं वहति प्रथयति च पावनं चरितम् ॥ ३ ॥

**वाक्यरचना**—आश्रमे–वत्साः–बालाः–खगाः–विहरन्ति–खादन्ति–स्वैरम्—फलानि–तृणम् । ( कति वाक्यानि रचयितुं शक्यानि ? )

---

# अष्टमः पाठः ।

## आश्रमस्थाः जनाः ।

अहो पुण्यम् अस्य ऋषेः दर्शनम् । अस्य आश्रमस्य अयम् अधिपतिः । शुद्धम् अस्य आचरणं प्रशान्ता च मूर्तिः । विद्यायाः निधिः एव अयं वर्तते । सन्तोषः एव अस्य परं धनम् । ईशभक्तेः अनुष्ठानम् एव अस्य उद्योगः । एषः ऋषिः एतस्मिन् आश्रमे वसति । तेन सर्वम् एतद् स्थलं पवित्रम् भवति ।

अयं मुनिः शिष्यान् वेदान् अध्यापयति । सर्वा च सा वेदविद्या अस्य जिह्वाग्रे वर्तते । एनं छात्राः अनुपठन्ति । तेषां पठनं शुकाः शृण्वन्ति अनुवदन्ति च । अनन्तरं मुनिः कुमारैः सह क्षेत्रं गच्छति तत्र हलेन भूमिं कृषति बीजानि च वपति ।

बलीवर्दाः हलं कर्षन्ति । तान् कुमाराः कशाभिः ताडयन्ति

एतस्मिन् एव आश्रमे अयं कुमारः वसति । अयं मुनिः अस्य पिता । अस्य बालस्य माता भ्राता भगिनी च अत्र एव सर्वे वसन्ति ।

एतेषाम् एतद् गृहम् । अहो पावनम् एतद् गृहं भाग्यशालि च कुलम् ।

अधिपतिः । निधिः । कशा । शुकः । क्षेत्रम् । बलीवर्दः । हलम् । प्रशान्ता । शुद्धम् । पावनम् । भाग्यशालि । कृषति । वपति । ताडयति । अनुपठति ।

**प्रश्नाः**—क्व उपविशति अयम् ऋषिः ? कीदृशम् अस्य आचरणम् ? किम् अस्य धनम् ? कः अस्य उद्योगः ? किम् अध्यापयति सः ? के क्षेत्रं गच्छन्ति ? के हलं कर्षन्ति ? कः अस्य कुमारस्य पिता ? के वसन्ति अस्मिन् गृहे ?

**लेखनम्**—ईशभक्तेः अनुष्ठानम् एव अस्य उद्योगः । सर्वा वेदविद्या अस्य जिह्वाग्रे वर्तते । अहो पावनम् एतद् गृहं भाग्यशालि च कुलम् ।

**वाक्यपूरणम्**–( १ ) विद्यायाः ———— एव एषः मुनिः ।
( २ ) कुमाराणां ———— शुकाः शृण्वन्ति च ———— च ।
( ३ ) मुनिः हलेन क्षेत्रं ———— तत्र सस्यं च ———— ।
( ४ ) कुमाराः ———— कशाभिः ———— ।
( ५ ) एषः कुमारः अस्मिन् एव ———— वसति ।

---

# नवमः पाठः ।

## सूर्यः ।

सूर्यः प्रभाते उदेति । आरक्तम् अस्य विम्बं कोमलः च प्रकाशः । सूर्योदये निशायाः अन्धकारः नश्यति सर्वा च सृष्टिः प्रबुद्धा

भवति । सूर्यस्य प्रकाशं दृष्ट्वा खगाः गायन्ति । वृक्षाः लताः च तदा विकिरन्ति कुसुमानि । कमलानि विकसन्ति सुगन्धं च

तेषां पवनः हरति सर्वासु दिशासु। ननु एतद् एव सूर्यस्य स्वागतम्।

अहं प्रभाते उत्तिष्ठामि मुखमार्जनं स्नानं च करोमि। दुग्धं पीत्वा अहं पाठान् पठामि। पूर्वाह्णे भोजनं कृत्वा अहं पाठशालां गच्छामि। मध्याह्ने सूर्यस्य प्रकाशः चण्डः भवति पुनः च सन्ध्याकाले कोमलः। सन्ध्याकाले कंचित् कालम् अहं क्रीडामि अनन्तरं च गृहम् आगच्छामि। तदा सूर्यः अस्तं गच्छति अचिराद् च रात्रिः भवति। रात्रौ सर्वत्र अन्धकारः वर्तते। तदा अहं स्वपिमि अनुभवामि च ईशकृपया विश्रान्तिसुखम्।

उदये सविता रक्तः रक्तश्चास्तमने तथा ॥
सम्पत्तौ च विपत्तौ च महतामेकरूपता ॥ १ ॥

क्षालयन्तमभितो भुवनानि। लालयन्तमभितः कमलानि ॥
पालयन्तमथ कोककुलानि। ज्योतिषां पतिमहं महयामि ॥ २ ॥

---

विम्बम्। निशा। पवनः। स्वागतम्। सविता। प्रबुद्धा। चण्डः। कोमलः। प्रस्फुटम्। विकिरति। विकसति। हरति। महयति।

**प्रश्नाः**—कः प्रभाते उदेति? कीदृशम् अस्य बिम्बं तदा? किं कुर्वन्ति खगाः प्रभाते? किं कुर्वन्ति वृक्षाः प्रभाते? किं करोति पवनः प्रभाते? के सूर्यस्य स्वागतं कुर्वन्ति? किं करोषि त्वं प्रातःकाले? कदा त्वं पाठशालां गच्छसि? कीदृशः सूर्यस्य प्रकाशः मध्याह्ने? कदा अस्तं गच्छति सूर्यः?

**वाक्यपूरणम्**—(१) प्रभाते सूर्यस्य बिम्बं ——— प्रकाशः च ———।
(२) सूर्योदये ——— अन्धकारः ———।
(३) सूर्यस्य बिम्बं दृष्ट्वा ——— गानं ———।
(४) प्रभाते ——— च ——— च कुसुमानि विकिरन्ति।
(५) प्रभाते पवनः ——— गन्धं ——— दिशासु ———।
(६) सूर्यस्य स्वागतं खगाः ——— च गानेन ——— च कुर्वन्ति।
(७) अहं ——— उत्तिष्ठामि ——— करोमि दुग्धं ——— च।

**पठनम्**—चण्डभानुरुदये बहुरक्तः । स्वर्णगोल इव भाति सुतप्तः ॥
बिंबमस्य च तदा सुविशालम् । कोमलाश्च किरणा विलसन्ति ॥ १ ॥
वर्णयन्ति विहगा रविदेवम् । कूजनैः सुमधुरैरुदयेऽस्य ॥
पूजयन्ति तरवो रविराजम् । प्रस्फुटैश्च कुसुमैः प्रभवन्तम् ॥ २ ॥

---

# दशमः पाठः

## चन्द्रः ।

चन्द्रः रात्रौ उदेति । चन्द्रस्य प्रकाशः शीतलः वर्तते । सूर्यस्य प्रकाशः स्वकीयः अतः एव चण्डः । चन्द्रस्य प्रकाशः परकीयः अतः एव शीतलः । अयं सूर्यात् प्रकाशं लभते । चन्द्रः परिभ्रमति पृथिवीं परितः । एकेन मासेन पूर्णा भवति अस्य प्रदक्षिणा ।

ज्योत्स्ना नाम चन्द्रस्य प्रकाशः । चन्द्रिका इति अपि अस्याः नामान्तरम् । ज्योत्स्नया प्रकाशिता निशा आह्लादयति जनानां

चित्तम् । ज्योत्स्नया प्रकाशितं भूतलं शुभ्रवस्त्रेण आच्छादितम् इव विभाति । ज्योत्स्नया प्रकाशितः जलप्रवाहः रौप्यमयः इव विभाति । अहो प्रसन्नता ज्योत्स्नायाः ।

पूर्णिमायां चन्द्रस्य बिम्बं पूर्णं वर्तुलं च वर्तते । ततः क्रमेण तद् क्षीयते । अष्टम्यां तिथौ तस्य आकारः अर्धवर्तुलः भवति । अहो मनोहरं तस्य सौभाग्यम् । चन्द्रस्य कलां मस्तके वहति भगवान् शङ्करः । अहो सौंदर्यं तस्य अलङ्कारस्य । अमावास्यायां चन्द्रस्य न कोऽपि भागः आकाशे दृश्यते । पुनः प्रतिपदः आरभ्य पूर्णिमापर्यन्तं क्रमेण वर्धते चन्द्रः । एताः चन्द्रस्य षोडश कलाः सृष्टिदेवतायाः रम्याणि भूषणानि भवन्ति ।

शशिना च निशा निशया च शशी
शशिना निशया च विभाति नभः ।
पयसा कमलं कमलेन पयः
पयसा कमलेन विभाति सरः ॥ १ ॥

---

शीतरश्मिः । पृथिवी । प्रदक्षिणा । ज्योत्स्ना । प्रवाहः । स्वकीयः । परकीयः । रौप्यमयः । वर्तुलः । उदेति । परिभ्रमति । विभाति । विलसति । क्षीयते ।

**प्रश्नाः**—कदा उदेति चन्द्रः ? कीदृशः प्रकाशः चन्द्रस्य ? किमर्थं चन्द्रस्य प्रकाशः शीतलः ? कीदृशं बिम्बं चन्द्रस्य अष्टम्याम् ? कति कलाः अस्य ?

**पठनम्**—शीतरश्मिरुदये बहुशुभ्रः । रौप्यगोल इव भाति सुशोभः ॥
बिम्बमस्य च तदा सुविशालम् । शीतलाश्च किरणा विलसन्ति ॥ १ ॥

उदेति सूर्यो गगने प्रभाते । चन्द्रोऽस्तमायाति तदैव नित्यम् ॥
कस्माद् भवेद् वैरमुभौ तु मित्रे । भो बाल सर्वं कथयस्व तन्मे ॥ २ ॥

उदेति चन्द्रो गगने निशायां । सूर्योऽस्तमायाति तदैव नित्यम् ॥
वैरं द्वयोर्नैव च नैव चेदम् । विश्वं नियन्तुं श्रमयोर्विभागः ॥ ३ ॥

**वाक्यपूरणम्**—( १ ) चन्द्रः——— उदेति । अस्य प्रकाशः ——— भवति ।

( २ ) चन्द्रस्य प्रकाशः ——— अतः एव अयं ——— । सूर्यस्य प्रकाशः ——— अतः एव अयं ——— ।

( ३ ) चन्द्रः ——— प्रकाशं लभते ।

( ४ ) पृथिवीं ——— चन्द्रः ——— ।

( ५ ) ——— प्रकाशितं भूतलं जनानां ——— आह्लादयति ।

( ६ ) भगवान् शंकरः स्वस्य ——— अर्धचन्द्रं ——— ।

( ७ ) प्रतिपदः ——— पुनः ——— पर्यन्तं चन्द्रः क्रमेण ——— ।

**अर्थनिर्णयः**—समानार्थान् शब्दान् कथयत ।

रविः–इन्दुः–रश्मिः–शशी–सूर्यः–किरणः–चन्द्रः–करः–शीतरश्मिः–चण्डरश्मिः–भास्करः ।

---

# एकादशः पाठः ।

## आकाशः ।

दिवा प्रकाशते सूर्यः । रात्रौ प्रकाशते चन्द्रः । सूर्यः चन्द्रः च परमेश्वरस्य द्वे नेत्रे स्तः । एताभ्यां नेत्राभ्यां परमेश्वरः पश्यति जनानां व्यवहारम् । ये जनाः पुण्यम् आचरन्ति ते प्रियाः भवन्ति परमेश्वरस्य । परं ये जनाः पापम् आचरन्ति ते अप्रियाः भवन्ति तस्य । ये सदाचारेण प्रीणयन्ति परमेश्वरं ते अनुभवन्ति सुखम् । परं ये दुराचारेण कोपयन्ति तं ते अनुभवन्ति दुःखम् ।

प्रथमः कुमारः—कुत्र प्रकाशते सूर्यः ?

द्वितीयः कुमार—आकाशे ।

प्र० कु०—कुत्र वा प्रकाशते चन्द्रः ?

द्वि० कु०—आकाशे एव । अपि नाम अस्ति किंचित् अन्यद् आकाशे ?

प्र० कु०—अस्ति एव ।

द्वि० कु०—किं तद् ? कृपया कथय मे तद् सर्वम् ।

प्र० कु०—पश्य एतद् आलेख्यम् । किम् इदम् ?

द्वि० कु०—अयं किल मेघः ।

प्र० कु०—अथ कीदृशः अस्य वर्णः ?

द्वि० कु०—श्यामः ।

प्र० कु०—किं यच्छति मेघः जनेभ्यः ?

द्वि० कु०—जलम् ।

प्र० कु०—किम् एतद् ?

द्वि० कु०—इदम् इन्द्रस्य धनुः ।

प्र० कु०—कीदृशी अस्य आकृतिः ?

द्वि० कु०—अर्धवर्तुला ।

प्र० कु०—कीदृशः अस्य वर्णः ?

द्वि० कु०—चित्रितः । बहवः वर्णाः अत्र सन्ति । रक्तः पीतः नीलः हरितः कौसुम्भः पाटलः च ।

प्र० कु०—कथम् उद्भवति एतद् धनुः मेघे ?

द्वि० कु०—न जानामि खलु तद् ।

प्र० कु०—एतद् सूर्यस्य किरणानां सङ्कीर्णं प्रतिबिम्बं भवति ।

द्वि० कु०—अहो रुचिरं प्रतिबिम्बम् । अहो रम्यम् एतद् धनुः ।

प्र० कु०—अन्यच्च । पश्य एताः तारकाः ।

द्वि० कु०—असंख्याः खलु एताः विद्यन्ते ।

प्र० कु०—एतासु कानिचिद् नक्षत्राणि अन्ये च सन्ति ग्रहाः ।

द्वि० कु०—अपि अस्ति किंचिद् अन्तरम् एतयोः ?

प्र० कु०—अथ किम् । नक्षत्रस्य प्रकाशः स्वकीयः । ग्रहस्य तु परकीयः प्रकाशः ।

द्वि० कु०—स्पष्टम् एतद् । एतदेव ननु सूर्यचन्द्रयोः अन्तरम् ।

प्र० कु०—कथमिव शोभन्ते एतानि सर्वाणि नक्षत्राणि ?

द्वि० कु०—आकाशः एव कश्चित् सागरः । तत्र एतानि सर्वाणि मौक्तिकानि इव स्फुरन्ति ।

प्र० कु०—अथवा सृष्टिः एव काचित् लता । तस्याः लतायाः एतानि सर्वाणि कुसुमानि इव विकसन्ति ।

द्वौ० कु०—अहो चतुरः विश्वस्य कर्ता । अहो रमणीया तस्य सृष्टिः । तं परमेश्वरं नमामः ।

---

मेघः । चापः । प्रतिबिम्बम् । तारका । मौक्तिकम् । प्रकाशते । स्फुरति । प्रीणयति । कोपयति ।

**प्रश्नाः**—कति नेत्राणि ईश्वरस्य ? के जनाः ईश्वरस्य प्रियाः ? किम् अन्यद दृश्यते आकाशे ? कीदृशी इन्द्रचापस्य आकृतिः ? कति वर्णाः सन्ति अस्मिन् इन्द्र-चापे ? कति ग्रहाः ज्ञाताः जनैः ? किम् अन्तरं ग्रहस्य नक्षत्रस्य च ?

**पठनम्**—आकाशमार्गेण चरन्ति मेघाः । सिञ्चन्ति भूमिं विपुलैः पयोभिः ॥
इन्द्रस्य चापो बहुवर्णयुक्तः । संदृश्यतेऽन्यत्र मरीचिजातः ॥ १ ॥

एकश्चन्द्रस्तमो हन्ति नक्षत्रैः किं प्रयोजनम् ।
वरमेको गुणी पुत्रो निर्गुणानां शतेन किम् ॥ २ ॥

**वाक्यपूरणम्**—( १ ) ये जनाः ——आचरन्ति ते ईश्वरस्य ——।

( २ ) ईश्वरं —— जनाः ——।

( ३ ) रविः चन्द्रः च —— प्रकाशेते । तारकाः नक्षत्राणि —— च आकाशे ——।

( ४ ) मेघः —— चरति किं च जलेन —— सिञ्चति ।

( ५ ) श्वेताः मेघाः —— न यच्छन्ति किंतु —— मेघाः जलं यच्छन्ति ।

( ६ ) ग्रहस्य प्रकाशः———किंतु नक्षत्रस्य प्रकाशः ।
( ७ ) आकाशे———इव———शोभन्ते ।
( ८ ) लतायाः यथा———तथैव आकाशस्य——— ।

**वाक्यरचना**—प्रभाते–सायंकाले–सूर्यः–चन्द्रः—तारका–इन्द्रचापः–-प्रकाशते–उदेति–अस्तं गच्छति । ( कति वाक्यानि रचयितुं शक्यानि )

**लेखनम् आलेखनं च**—सर्वेषां नक्षत्राणां नामानि लिखत । तेषु कतिपयानां इन्द्रचापस्य च आकृतीः आलिखत ।

---

# द्वादशः पाठः

## धेनुः ।

एषा धेनुः । अस्याः चत्वारः पादाः द्वे शृङ्गे एकं लाङ्गूलं च अस्ति । अस्याः वत्सः अत्र तिष्ठति । धेनोः वर्णः श्वेतः । वत्सस्य वर्णः श्यामः । वत्सस्य अपि चत्वारः पादाः द्वे शृङ्गे एकं लाङ्गूलं च वर्तते । अयं प्रथमं पिबति दुग्धं धेनोः स्तनात् । अनन्तरं गोपालः धेनुं दुग्धं दोग्धि । धेनोः पार्श्वे सः भूमौ उपविशति वामहस्ते च पात्रं धृत्वा दक्षिणहस्तेन तस्मिन् पात्रे दुग्धं दोग्धि । अन्यद् पात्रं भूमौ वर्तते गोपालस्य समीपे । अस्मिन् पात्रे सः दुग्धं निक्षिपति । ततः पुनरेकदा दुग्धं पिबति वत्सः ।

प्रभातकालः सन्ध्याकालः च द्वौ दोहनस्य कालौ । प्रतिदिनं द्विवारं गोपालः धेनुं दोग्धि । अस्याः पुरतः कुण्डम् अस्ति । तत्र किंचित् खाद्यं स्थापयति गोपालः । तद् सर्वं धेनुः भक्षयति । ततः इयं वत्साय गोपालाय च वितरति दुग्धम् ।

प्रभाते अहं धेनोः दुग्धं पिबामि । तद् अतीव मधुरं पथ्यं च वर्तते । आम्लेन मिश्रितं दुग्धं दधि भवति । गोपालस्य भार्या दधि मथ्नाति ।

तदा तत् तक्रं भवति। दधि तक्रं च अम्ले स्तः। तक्रे प्लवते नवनीतम्। तप्तं नवनीतं घृतं भवति। नवनीतं घृतं च स्वादु वर्तते। दधि तक्रं नवनीतं घृतं च चत्वारः दुग्धस्य विकाराः।

बालकृष्णाय बहु रोचन्ते दुग्धं दधि नवनीतं च।

धेनुः। वत्सः। दुग्धम्। गोपालः। नवनीतम्। दोग्धि। निक्षिपति। स्थापयति। वितरति।

**पठनम्**—सौम्या धेनुः सुजनैः सेव्या। सुभगं तस्या दर्शनमनिशम्।
स्वादु च दुग्धं मधुरः शब्दः। सततं कृष्णो धेनुसमीपे ॥ १ ॥
आदौ पयश्चूषति तर्णकोऽयम्। पश्चादसौ दोग्धि च पालको गाम् ॥
सौम्या हि धेनुर्मधुरं च दुग्धम्। ईशप्रसादात् तदहं पिबामि ॥ २ ॥

**प्रश्नाः**—कीदृशः धेनोः वर्णः? कति पादाः धेनोः? कति पादाः वत्सस्य? कदा गोपालः धेनुं दोग्धि? गोपालस्य वामहस्ते किं वर्तते? किम् अस्ति धेनोः पुरतः? किं खादति धेनुः? कति विकाराः दुग्धस्य? कीदृशः स्वादः तक्रस्य?

**वाक्यपूरणम्—**

( १ ) धेनोः ——— पार्श्वे तिष्ठति । अयं ——— पातुं अतीव उत्सुकः ।

( २ ) प्रथमं ——— धेनोः स्तनात् दुग्धं पिबति पश्चात् ——— दुग्धं दोग्धि ।

( ३ ) गोपालस्य ——— दधि मथ्नाति । तदा दध्नः ——— भवति । तक्रस्य उपरि ——— प्लवते च ।

( ४ ) दुग्धं दधि नवनीतं च ——— रोचन्ते ।

( ५ ) दुग्धस्य विकारः ——— । नवनीतस्य विकारः ——— । सुवर्णस्य ——— अलङ्कारः । तूलस्य ——— वस्त्रम् ।

---

# त्रयोदशः पाठः ।

## अश्वः ।

एषः अश्वः । अतीव धीरः सुदर्शनः च अयं पशुः । अस्य

चत्वारः पादाः दीर्घाः सन्ति । ग्रीवा अपि दीर्घा । परं कर्णौ ह्रस्वौ । अतिवेगेन धावति अश्वः उत्प्लवते च । अयं पुरुषं पृष्ठेन वहति ।

अश्वानां वर्णाः विविधाः । केचित् लोहिताः अन्ये श्वेताः कतिचित् कृष्णाः अपरे पीताः परे च चित्रिताः वर्तन्ते । द्वौ अश्वौ रथं नयतः । केचित् धनिकाः राजपुरुषाः वा रथं प्रति योजयन्ति चतुरः अश्वान् । समवर्णाः अश्वाः यदा रथं नयन्ति तदा अतीव मनोहरं तद् दृश्यते ।

युद्धे अपि अश्वान् आरोहन्ति भटाः । उग्राणि अग्न्यस्त्राणि इतस्ततः कर्षन्ति अश्वाः । रणक्षेत्रे अपि अश्वाः सततं धीराः उदाराः च वर्तन्ते । कदाचित् ते रक्षन्ति योधानां प्राणान् ।

पश्चात्पुच्छं वहति विपुलं तच्च धूनोत्यजस्रं
दीर्घग्रीवो भवति च खुरा यस्य चत्वार एव ।
दर्भानत्ति प्रकिरति शकृत्-पिण्डकानाम्रमात्रान्
अश्वः सोऽयं जगति विदितो धैर्यदाक्षिण्ययुक्तः ॥

---

अश्वः । भटः । रथः । योधः । रणक्षेत्रम् । उत्प्लवते । योजयति । कर्षति । रक्षति ।

**प्रश्नाः**—कथं धावति अश्वः ? कं वहति अयं पृष्ठेन ? कति अश्वाः रथं वहन्ति ? युद्धे के पशवः भटानां साहाय्यं कुर्वन्ति ? किं कर्षन्ति अश्वाः युद्धे ?

**आलेखनम्**—१ अश्वस्य धेनोः च खुरयोः अन्तरं दर्शयत ।
२ रथं अग्न्यस्त्रं च आलिखत ।

**वाक्यपूरणम्**—

( १ ) अश्वस्य ——— पादाः वर्तन्ते किं च धेनोः अपि ——— ।
( २ ) महता ——— अश्वः धावति ।
( ३ ) धनिकाः ——— वा रथं प्रति चतुरः अश्वान् ——— ।
( ४ ) इन्द्रस्य ——— पुराणेषु प्रसिद्धः । तस्य नाम ——— ।
( ५ ) अर्जुनस्य रथं चत्वारः ——— वहन्ति । तान् च भगवान् ——— स्वयं प्रतोदेन चालयति ।

**स्वगतं वाचनम् अर्थस्य च अनुकरणम्**—( १ ) उत्तिष्ठत । दक्षिणं भुजम् उद्धरत । ( २ ) वामं भुजम् भ्रामयत । ( ३ ) उभौ कर्णौ हस्ताभ्यां धृत्वा उपविशत । ( ४ ) उद्यानं गत्वा एकं हरितं पर्णम् आनयत तद् च आलिखत ।

---

# चतुर्दशः पाठः ।

## सारमेयः ।

एषः सारमेयः । जनाः गृहे पालयन्ति सारमेयम् । रक्षति च असौ तेषां गृहम् । अपूपं मांसं च सारमेयः भक्षयति । रात्रौ पालकस्य गृहद्वारे तिष्ठति भषति च । अस्य भषणेन तत्र न आगच्छन्ति चोराः । दिवा असौ कंचित् कालं स्वपिति ।

अत्र प्रवहति प्रस्रवः । एतदुपरि अयं दारुफलकस्य सेतुः । एतस्मिन् सेतौ तिष्ठति एषः सारमेयः । धारयति च अपूपं मुखेन । प्रवाहस्य एकस्मात् तटात् अन्यं तटम् अयं गच्छति । अकस्मात् तिष्ठति सेतोः मध्यभागे । पश्यति च आत्मनः

प्रतिबिम्बं जले। तदा अयं चिन्तयति। 'आः, अन्यः कोऽपि कुक्कुरः अत्र विद्यते। अस्य मुखे वर्तते अपूपः। अपहरामि एनम् अहम्' इति। तथा कर्तुं अयं कुक्कुरः उद्घाटयति मुखम्। तत्क्षणे एव अस्य मुखात् अधः पतति अपूपः निमज्जति च जले। तेन खिन्नवदनः सः शनैः शनैः गृहं गच्छति।

अहो मौर्ख्यं कुक्कुरस्य। अतितृष्णा विनाशाय।

सारमेयः। कुक्कुरः। अपूपः। प्लवः। सेतुः। तृष्णा। भषति। पालयति। धारयति। चिन्तयति। पतति।

**प्रश्नाः**—किं भक्षयति सारमेयः? किं करोति सः दिवा रात्रौ च? अस्मिन् चित्रे कुत्र तिष्ठति सारमेयः? कीदृशः एषः सेतुः? किमर्थं सः सेतौ तिष्ठति? तदा किं करोति सः? किमर्थं सः मुखम् उद्घाटयति?

**वाक्यपूरणम्**—

( १ ) कुक्कुरः अपूपं मांसं च———पालकस्य गृहं च———।

( २ ) सारमेयस्य———श्रुत्वा चोराः तद् गृह———।

( ३ ) जनाः सेतुना नद्याः एकस्मात्———अन्यं———गच्छन्ति।

( ४ ) मध्यभागे———तिष्ठति आत्मनः———च जले पश्यति।

**मनोगतं वाचनम् अर्थानुकरणं च**—( १ ) उत्तिष्ठत। नेत्रे निमीलयत। पार्श्वतः भुजौ प्रसारयत। ( २ ) कट्यां करौ निधाय पञ्चकृत्वः श्वसित।

**नाट्यम्**—[ कश्चन कुमारः सारमेयं नाटयति। अपूपं मुखेन आदाय सः इतस्ततः भ्रमति वदति च ]—

अये एषा नदी अत्र वर्तते। अस्याः अपरं तटं गन्तुम् इच्छामि। अत्र तु गभीरं जलम्। किं करोमि। कथं नद्याः पारं गच्छामि। हन्त भोः। एषः सेतुः अत्र दृश्यते। तेन अपरं तटम् अधुना गच्छामि। ( सेतौ तिष्ठति )

आः किम् एतद् दृश्यते जले। अन्यः कोऽपि कुक्कुरः अधः तिष्ठति। अस्य मुखे वर्तते अपूपः। हन्त भोः। अपहरामि इमम् अपूपम् अधुना।—तिष्ठ तिष्ठ रे क्षुद्र

पशो । इमम् अपूपं भक्षयितुं न त्वम् अर्हसि । अहम् एव अस्य भक्षणे योग्यः । इमम् मुखेन धृत्वा कुत्र गच्छसि रे शठ । एषः अहं तव अपूपं क्षणाद् अपहरामि । —( मुखम् उद्घाटयति )

हन्त । कुत्र गतः सः शठः । किं पतितं जले । अये कुत्र गतः मम अपूपः । हा कष्टम् ।

---

## पञ्चदशः पाठः ।

### अम्लानि द्राक्षाफलानि ।

एषः शृगालः कस्मिश्चिद् वने वसति । क्षुधितः सः इतस्ततः भ्रमति । यतते च किंचित् खाद्यं प्राप्तुम् । चिरेण सः कमपि द्राक्षामण्डपं पश्यति वदति च । 'अहो परं मे भाग्यम् । मधुरम्

एतद् भोजनं प्राप्तम् । सुपक्वानि खलु एतानि द्राक्षाफलानि दृश्यन्ते । एतानि अधुना अहं पर्याप्तं भक्षयामि ' इति ।

एषः द्राक्षामण्डपः अत्युन्नतः वर्तते । अत्र एषा द्राक्षालता बहु विस्तृता भवति । बहवः द्राक्षाफलपूगाः दोलायन्ते स्थाने स्थाने । ततः तान् लब्धुं शृगालः मुखम् उन्नतं करोति । तथापि एते उच्चाः द्राक्षाफलपूगाः दूरे एव वर्तन्ते । पुनः सः तिष्ठति पश्चिमपादाभ्याम् । तथापि न प्राप्नोति तान् । आश्चर्यं भोः । उच्चाः एते द्राक्षाफलपूगाः । किं करोमि । कथं प्राप्नोमि तान् । भवतु । अधुना अहं तान् प्रति उत्पतामि । इति सः चिन्तयति । ततः च उत्पतति आवेगेन बहुवारम् । तथापि न प्राप्नोति द्राक्षाफलपूगान् । तेन अतीव श्रान्तः सः तत्र भूमौ उपविशति । निराशया च खिन्नं भवति तस्य वदनम् ।

पश्चात् शृगालः उत्तिष्ठति अन्यत्र च गच्छति । किंचित् दूरं गत्वा सः द्राक्षाफलपूगान् पुनश्च पृष्ठतः निरूपयति वदति च । 'अम्लानि खलु एतानि द्राक्षाफलानि । न तानि भक्षयितुम् इच्छामि ' इति ।

अहो उत्साहः विनोदः च शृगालस्य ।

---

जम्बूकः । द्राक्षालता । द्राक्षाफलम् । उत्साहः । विनोदः । यतते । दोलायते । इच्छति । निरूपयति । उत्पतति ।

**प्रश्नाः**—किं प्राप्तुं यतते अयं शृगालः ? किं दृष्टं तेन ? द्राक्षाफलपूगान् लब्धुं किं करोति शृगालः ? किमर्थं सः उत्पतति ? किमर्थं सा पृष्ठतः निरूपयति ? किं वदति सः जम्बूकः तदा ?

**वाक्यपूरणम्**—

( १ ) क्षुधितः जम्बूकः ———— प्राप्तुं भ्रमति ।

( २ ) जम्बूकः एकं ———— प्रति गच्छति तत्र च ———— पश्यति ।

( ३ ) इयं द्राक्षालता ———— आच्छादयति ।

( ४ ) द्राक्षाफलपूगान् प्राप्तुं जम्बूकः ———— उन्नतं करोति वारंवारं ———— च ।

( ५ ) तदा तस्य वदनं ———— भवति । ———— सः गच्छति ।

**मनोगतं वाचनम् अर्थानुकरणं च**—( १ ) संस्कृत-पुस्तकं दक्षिण-हस्तेन उद्धृत्य दर्शयत। ( २ ) वामपार्श्वे स्थितं मित्रं हस्तेन स्पृशत। ( ३ ) उभौ हस्तौ मस्तके निधाय उत्तिष्ठत किं च सकृत् उत्पतत।

**नाट्यम्**—[ कश्चन कुमारः जम्बूकं नाटयति। एकस्मिन् उन्नते स्थाने द्राक्षा-फलपूगः लम्बते कुमारः इतस्ततः भ्रमति वदति च ]

अतीव क्षुधितः अहम्। इतस्ततः भ्रमामि अस्मिन् वने। परं न प्राप्तं किंचिदपि खाद्यम्। किं करोमि। क्व गच्छामि। हा कष्टम्। क्षुधया अतीव पीडितः अहम्।—हन्त भोः। किमेतद्। अये एषा खलु द्राक्षालता। अहो परं मे भाग्यम्। अधुना सुखं भक्षयामि एतानि पक्वानि फलानि। तानि प्राप्तुम् एवं करोमि। ( पश्चिमपादाभ्यां तिष्ठति )—आः, उन्नतानि फलानि वर्तन्ते। संप्रति उत्पतामि। ( उत्पतति )—आः, कथम् अधुनापि न प्राप्तम् एकमपि फलम्। पुनः उत्पतामि—( वारं वारम् उत्पतति )। हा कष्टम्। श्रान्तः अहम् अधुना। भवतु। अन्यत्र गच्छामि। अम्लानि खलु एतानि फलानि। न तानि भक्षयितुम् इच्छामि।

---

# षोडशः पाठः।

## मयूरः।

एषः मयूरः कस्मिंश्चिद् वृक्षे वसति। सः आम्रवृक्षः अति-तुङ्गः विशालः च वर्तते। तस्य समन्तात् सन्ति बहूनि क्षेत्राणि रोहन्ति च तत्र सरसानि सस्यानि। मयूरः प्रतिदिनं कोम-लानि फलानि बीजानि च भक्षयति। तस्य शब्दः मार्जारस्य शब्दवत् भवति। श्रुत्वा तं केकारवं दृष्ट्वा च तस्य रम्यं रूपं बहवः कुमाराः मोदन्ते। प्रयच्छन्ति च तस्मै मधुराणि खाद्यानि।

समीपे एव अन्यास्मिन् वृक्षे वसति कश्चित् वायसः। तं दृष्ट्वा उपलैः ताडयन्ति ते कुमाराः। ततः सः वायसः चिन्तयति। 'कथं नु एतद् भवति। एते बालाः तं मयूरं भोजयन्ति विविधानि खाद्यानि। मां तु ताडयन्ति उपलैः। किमिति। ( विचार्य ) ननु

यथार्थम्। तस्य स्वरः किल मधुरः। रूपं च रुचिरं विद्यते। एतदेव तस्य कारणम्। अस्तु। मम स्वरः प्रकृत्या कर्कशः। सः अन्यथा कर्तुं न शक्यः। मम वर्णः कृष्णः। एनम् अहम् अन्यथा करोमि। अहो उचितः एषः उपायः' इति। ततः सः वायसः गच्छति मयूरस्य समीपम्। गृह्णाति भूमौ पतितानि तस्य पिच्छानि धारयति च शरीरे। ततः वृक्षं गत्वा सः काकः उच्चैः शब्दं करोति। 'अहं मयूरः, अहं मयूरः' इति।

पश्चाद्बर्हं वहति विपुलं चित्रितं दीप्तिमन्तं<br>
काले काले व्यजनमिव तं विस्तृतं यः करोति।<br>
शीर्षे कान्तं वहति तरलं पिच्छकानां कलापं<br>
कोऽयं पक्षी रुचिरवदनो नर्तने च प्रवीणः॥ १॥

---

मयूर । केकारवः । बर्हः । पिच्छम् । आम्रवृक्षः । नृत्यति । भोजयति । धारयति । विस्तारयति ।

**प्रश्नाः**—क्व वसति मयूरः ? किं भक्षयति मयूरः ? कीदृशं मयूरस्य रूपम् ? कीदृशः मयूरस्य स्वरः ? कस्मै यच्छन्ति कुमाराः खाद्यम् ? किमर्थं मयूराय न काकाय ? कः उपायः चिन्तितः काकेन ? किं करोति सः तदा ?

**वाक्यपूरणम्**—

( १ ) मयूरस्य———सरस्वती देवी उपविशति ।
( २ ) श्रीकृष्णः———पिच्छानि मस्तके धारयति ।
( ३ ) मेघं दृष्ट्वा मयूरः———आत्मनः———विस्तारयति च ।
( ४ ) यदा मयूरः नृत्यति———तस्य भार्या मयूरी अपि———।
( ५ ) मयूरस्य बर्हः दीर्घः———च । मयूर्याः———न वर्तते ।
( ६ ) ———मस्तके शिखा वर्तते किंतु———मस्तके न———।

**वाक्य-क्रमः**—[ एतानि वाक्यानि स्वगतं वाचयत । तानि पुनः योग्यक्रमेण ग्रथयत । ]

( १ ) तस्य रूपं कृष्णं स्वरः च कर्कशः । ( २ ) तस्मै कुमाराः प्रतिदिनं खाद्यं यच्छन्ति । ( ३ ) भूमौ पतितानि मयूरस्य पिच्छानि सः स्वशरीरे धारयति । ( ४ ) एकस्मिन् वृक्षे कश्चित् मयूरः वसति । ( ५ ) तदा सः काकः वदति 'अहं मयूरः अहं मयूरः' इति । ( ६ ) तस्य रूपं रम्यं स्वरः च मधुरः । ( ७ ) अन्यस्मिन् वृक्षे कश्चन वायसः वसति । ( ८ ) तदा सः काकः मयूरस्य समीपं गच्छति । ( ९ ) प्रतिदिनं कुमाराः उपलैः तं ताडयन्ति ।

---

# सप्तदशः पाठः ।

## पञ्जरस्थः शुकः ।

प्र० कु०—प्रिय वयस्य, किम् एतद् ?

द्वि० कु०—अयं पञ्जरः ।

प्र० कु०—कथं नु निर्मितः एषः पञ्जरः ?

द्वि० कु०—लोहस्य शलाकाभिः ।

प्र० कु०—केन निर्मितः एषः पञ्जरः ?

द्वि० कु०—लोहकारेण खलु ।

प्र० कु०—कः नाम एषः खगः अस्मिन् पञ्जरे वसति ?

द्वि० कु०—अयं किल शुकः ।

प्र० कु०—किमिति एषः अत्र आगच्छति वसति च ?

द्वि० कु०—अत्र न आगच्छति अयं स्वयम् एव । किन्तु जनाः एनं गृह्णन्ति पञ्जरे च स्थापयन्ति ।

प्र० कु०—अहो निघृर्णता जनानाम् । इमं वराकं खगम् अकारणम् एव पीडयन्ति ते ।

द्वि० कु०—एतद् जनानां कर्म न अकारणं भवति । अस्ति एव अत्र किमपि कारणम् । कारणं विना न कार्यं प्रभवति । न गृह्णन्ति जनाः वायसं चटकं गृध्रं वा ।

प्र० कु०—किमर्थं तर्हि ते शुकं गृह्णन्ति ?

द्वि० कु०—न एतद् ज्ञातं त्वया ? कथय तर्हि । कीदृशः वर्णः शुकस्य ?

प्र० कु०—हरितः खलु । परं तस्य कण्ठं परितः रक्ता रेखा वर्तते । चञ्चुः च आरक्ता ।

द्वि० कु०—कीदृशः वर्णः वायसस्य ?

प्र० कु०—कृष्णः । तस्य चञ्चुः अपि कृष्णा ।

द्वि० कु०—अथ कस्य रूपं रुचिरम् ?

प्र० कु०—नूनं शुकस्य, न तु वायसस्य ।

द्वि० कु०—तथैव चटकस्य गृध्रस्य वा रूपं रुचिरं नास्ति ।

सर्वेषु खगेषु शुकस्य मयूरस्य च रूपम् अतिरुचिरं वर्तते । अपरं च । कीदृशः स्वरः वायसस्य ?

प्र० कु०—कर्कशः किल । तस्य स्वरः मां न आनन्दयति । मह्यं न रोचते तस्य स्वरः ।

द्वि० कु०—यथा वायसस्य स्वरः तुभ्यं न रोचते न च आनन्दयति त्वाम्, तथैव कस्मै अपि नराय सः न रोचते । कम् अपि जनं न सः आनन्दयति । कीदृशः स्वरः पुनः शुकस्य ?

प्र० कु०—शुकस्य स्वरः मधुरः । सः माम् आनन्दयति । मह्यं रोचते शुकस्य स्वरः ।

द्वि० कु०—यथा शुकस्य स्वरः तुभ्यं रोचते त्वां च आनन्दयति, तथा सर्वेभ्यः जनेभ्यः सः रोचते आनन्दयति च सर्वान्

जनान्। किमर्थं तर्हि जनाः शुकम् एव गृह्णन्ति पालयन्ति च? न वायसं गृध्रं वा?

प्र० कु०—ज्ञातं खलु एतद् मया अधुना। यतः किल शुकस्य रूपं रुचिरं स्वरः च मधुरः।

द्वि० कु०—शुकाय जनाः फलानि जलं च प्रयच्छन्ति। तं न पीडयन्ति ते।

प्र० कु०—ननु सत्यम् एतद्। परं यथा वृक्षस्थाः शुकाः आकाशे स्वैरं डयन्ते तथा न पञ्जरस्थः एष शुकः।

द्वि० कु०—बाढम्। एतावान् सः न स्वतन्त्रः। जनाः च तावन्मात्रं स्वार्थपराः। किन्तु पश्य। अयं शुकः ईश्वरस्य नामानि पठति।

प्र० कु०—आश्चर्यं भोः। स्फुटम् एव एषः 'सीता रामः' 'गोपालकृष्णः' इति वदति।

द्वि० कु०—अथ कः पाठयति इमम् एतद्?

प्र० कु०—अस्य पालकः खलु।

द्वि० कु०—अपरं च केचित् शुकाः पण्डितानां गृहेषु वेदवाक्यानि अपि पठन्ति।

प्र० कु०—अहो बत चित्रम्। अपि सत्यम् एतद्?

द्वि० कु०—अथ किम्?

प्र० कु०—कथमिव?

द्वि० कु०—ब्राह्मणाः सदैव पठन्ति वेदान्। तद् सर्वं शुकाः शृण्वन्ति अनुपठन्ति च कानिचित् वाक्यानि। इति विविधाः निर्देशाः पण्डितानां चरितेषु वर्तन्ते।

प्र० कु०—ईश्वरस्य नामपठनं हि सर्वथा प्राणिनां हिताय भवति।

द्वि० कु०—एवम् एतद्।

---

शुकः । पञ्जरः । शलाका । निर्घृणता । निर्देशः ।

**प्रश्नाः**—कथं निर्मितः पञ्जरः ? कान् खगान् जनाः पालयन्ति ? कान् खगान् पशून् च जनाः पञ्जरे स्थापयन्ति ? किमर्थं ते शुकं गृह्णन्ति ? किं फलं रोचते शुकाय ? किं वदति शुकः ? कः गुणः ईश्वरस्य नामपठनस्य ?

**सन्धिः**—किंचिद् अपि = किंचिदपि । किम् अस्ति = किमस्ति । खगान् आनयति = खगानानयति । एतद् आसनम् = एतदासनम् । वनात् आगच्छति = वनादागच्छति । किम् इच्छति = किमिच्छति । खगान् एव = खगानेव । खगम् एनम् आनयति = खगमेनमानयति । मधुरम् औषधम् = मधुरमौषधम् । एकस्मिन् अरण्ये = एकस्मिन्नरण्ये ।

[ व्यञ्जनानन्तरं यदा स्वरः आगच्छति तदा किं भवति ? ]

**वाक्यापूरणम्**—

( १ ) जनाः शुकमेव ——— न तु ——— वा ——— वा ।
( २ ) शुकस्य रूपं ——— स्वरः च ——— । तदर्थं ——— शुकं पालयन्ति ।
( ३ ) यथा ——— स्वरः तुभ्यं न रोचते तथैव जनेभ्यः सः ——— ।
( ४ ) यथा वृक्षस्थाः शुकाः ——— स्वैरं डयन्ते न तथा ——— शुकः ।
( ५ ) शुकाः ——— पठन्ति इति विविधाः निर्देशाः पण्डितानां ——— वर्तन्ते । अहो ——— शुकस्य ।

---

# अष्टादशः पाठः ।

## सिंहमूषकयोः ।

**कस्मिंश्चिदरण्ये वसति स्म कोऽपि सिंहः । पर्वतस्य गुहायां सः दिवा अस्वपत् रात्रौ च वने इतस्ततः परिभ्रमन् पशूनभक्षयत् । कदाचित् प्रभूतमाहारं कृत्वा अयं सिंहः कस्यचित् वृक्षस्य च्छायायां सुखेन अस्वपत् । ततः बहवः मूषकाः**

बिलात् निर्गत्य सानन्दं सिंहस्य शरीरे अनृत्यन् इतस्ततः। तेन पीडितः सिंहः प्रबुद्धः अभवत्। तं प्रबुद्धं दृष्ट्वा पलायन्त सर्वे मूषकाः बिलम्। तेषां कमपि मूषकमगृह्णात् सिंहः करतलेन। तदा स मूषकः आर्तस्वरेण अवदत्। 'भो महाराज, त्वं किल पशूनां राजा। प्रसिद्धः तव पराक्रमः। अहं तु क्षुद्रः जन्तुः। मम अपराधं तावत् क्षमस्व। मां मा जहि। मयि दयां कुरु। कदाचिदहं करिष्यामि तव साहाय्यम्' इति। एतद् तस्य आर्तवचनं श्रुत्वा सिंहः तममुञ्चत्।

गच्छता कालेन कश्चित् व्याधः तस्मिन्नेव वृक्षे जालमबध्नात्। तस्मिन् जाले पतितः सः सिंहः। तदा बहिः गन्तुमसमर्थः सः उच्चैः आक्रोशत्। तस्य आक्रोशमशृणोत् सः मूषकः। शीघ्रं सिंहस्य समीपं गत्वा सः अवदत्। 'भो महाराज, अलं भयेन। एषः अहं तव दासः। अहं त्वां मोचयामि अस्मात् जालात्' इति। अकृन्तत् च सत्वरं तद् जालं दन्तैः। ततः उदपतत् सिंहः तस्मात् जालादवदत् च। 'अहो कृतज्ञता मम मित्रस्य' इति।

सिंहोऽरण्यं चरति गहनं यो मृगेन्द्रः स्वराज्ये
गर्जन्नुच्चैर्वनचरपशून् भीषयत्यात्मशक्त्या ।
ग्रीवाऽऽच्छन्ना चमरसदृशैः केसरैरस्य घोरा
तीक्ष्णा दंष्ट्रा निशितनखरा एव शस्त्राणि तस्य ॥ १ ॥
कस्तूरी जायते कस्मात् को हन्ति करिणां शतम् ।
किं कुर्यात् कातरो युद्धे मृगात् सिंहः पलायनम् ॥ २ ॥
उद्यमेन हि सिद्ध्यन्ति कार्याणि न मनोरथैः ।
न हि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः ॥ ३ ॥

---

मृगेन्द्रः । केसराः । गर्जनम् । व्याधः । मूषकः । जालम् । अवसत् । अभ्रमत् । अवदत् । अमुञ्चत् । अभक्षयत् ।

**प्रश्नाः**—कुत्र अवसत् सिंहः ? कीदृशः तस्य वर्णः ? कीदृशं तस्य रूपम् ? सिंहस्य केसरान् दर्शय । किं करोति सिंहः दिवा–रात्रौ ? अस्यां कथायां कैः पीडितः सः सिंहः ? सः मूषकः किमवदत् ? अनन्तरं कुत्र पतितः सः सिंहः ? तदा कः तस्य साहाय्यमकरोत् ?

**वाक्यपूरणम्**—

( १ ) पर्वतस्य ——— सिंहः दिवा ——— रात्रौ च ——— परिभ्रमति ।
( २ ) सिंह्याः ——— न सन्ति सिंहस्य तु दीर्घाः ——— ।
( ३ ) सिंह्याः अपत्यानि ——— इति जनाः वदन्ति ।
( ४ ) सिंहस्य पृष्ठे ——— देवी उपविशति ।
( ५ ) व्याधाः सिंहान् ——— धारयन्ति अनन्तरं तान् ——— स्थापयन्ति च ।

**वाक्यक्रमः**—( योग्यक्रमेण वाक्यानि कथयत )—

( १ ) मूषकस्य वचनेन प्रीतः सः सिंहः तममुञ्चत् । ( २ ) तस्य आक्रोशं श्रुत्वा सः एव मूषकः तं प्रति आगतः । ( ३ ) गच्छता कालेन सः एव सिंहः तस्य वृक्षस्य समीपे जाले पतितः । ( ४ ) कश्चित् सिंहः कस्यचित् वृक्षस्य च्छायायां सुखमस्वपत् । ( ५ ) तदा मूषकः दीनस्वरेण अवदत् । ( ६ ) सः तद् जालं स्वदन्तैः अकृन्तत् सिंहममोचयत् च । ( ७ ) भो महाराज त्वं सर्वेषां पशूनां राजा । मयि दयां कुरु

इति। ( ८ ) तदा सः दुःखेन उच्चैः आक्रोशत्। ( ९ ) तस्य शरीरे बहवः मूषकाः अनृत्यन्। ( १० ) मूषकाः वदति स्म हे मृगराज अलं भयेन इति। ( ११ ) तैः पीडितः स प्रबुद्धः अभवत् कमपि मूषकं करेण अधारयत् च।

**सन्धिः**—अस्मिन् पाठे सन्धीन् दर्शयत।

---

# नवदशः पाठः।

## कवेः सारमेयस्य च।

अस्ति कस्मिन्नपि नगरे कश्चित् कविः। तस्य गृहे पालितः कोऽपि सारमेयः प्रियः आसीत्। परस्परयोः मित्रभावः आसीत् तयोः। प्रतिदिनं सः कविः तं सारमेयं सायंकाले बहिरनयत्। कदाचित् कस्यापि तडागस्य तटं तौ आगच्छताम्।

तडागस्य तटं सायंकाले अतीव रमणीयं दृश्यते। भूषयन्ति समन्ततः दूर्वाङ्कुराः भूमिम्। शोभते च तेषां हरितः वर्णः आरक्तेन सन्धिप्रकाशेन। तडागस्य जलं शीतलं स्वच्छं च वर्तते। शीतलः पवनः मन्दं मन्दं वहति तेन च अल्पाः तरङ्गाः तत्र समुद्भवन्ति। तेषां चरमाः भागाः सन्धिप्रकाशेन द्योतन्ते। तदतीव मनोहरं तडागस्य स्वरूपम्।

तत्रैव शिलायामतिष्ठत् सः कविः। पुरतः चापश्यत् प्रस्फुटं कमलम्। तस्य पाटलेन वर्णेन मोहितः सः अवदत्। 'अहो रुचिरमेतद् कमलम्। अभिनवानि अस्य दलानि। कोमलः अस्य अन्तर्भागः वर्तुला च आकृतिः। कथमपि एतद् ग्रहीतुमिच्छामि–
कमलं कान्तं कोमलगर्भम्। कुङ्कुमवर्णं गोलाकाराम्॥
जलदेवी खलु प्रसन्नहृदया। मुखकमलेन हि विहसति मन्ये॥ १॥
इति शीघ्रमेव पद्यरूपेण गायति स्म स्वीयं मनोरथम्। तस्य हस्ते

वेत्रयष्टिः आसीत् । तस्याः वर्तुलेन प्रान्तभागेन तद् कमलं समीपमानेतुं कविः अयतत । अनेकशः सः यत्नमकरोत् परं तद् कमलं सत्वरमपासर्पत् । एवं विफलः जातः कवेः यत्नः । तद् दृष्ट्वा तस्य सारमेयः सहसा एव न्यमज्जत् जले अतरत् च तद् कमलं प्रति । दन्तैः सः तद् कमलं नालादलुनात् मुखेन गृहीत्वा स्वामिनः समीपमानयत् च । तद् कमलमगृह्णात् कविः परामृशत् च हस्तेन सारमेयम् । अनेन सारमेयस्य चेष्टितेन संतुष्टः सः कविः अवदत् । 'अहो अद्भुतं खलु मम मित्रस्य बुद्धिचातुर्यम् । पशवः अपि एवं मनुजस्य संकल्पं तर्कयन्ति । आश्चर्यं खलु एतद् ।

चित्रं तदेतत् पशुनाऽतिशीघ्रं । मनोरथं मे निपुणं निरूप्य ॥
आनीतमेतद् कमलं तडागात् । सुबुद्धिमान् मे खलु सारमेयः' ॥ २ ॥

कविः करोति काव्यानि रसं जानाति पण्डितः ।
तरुः सृजति पुष्पाणि मरुद्वहति सौरभम् ॥ ३ ॥

---

कविः । तडागः । तरङ्गः । शिला । वेत्रयष्टिः । चेष्टितम् । अनयत् । अपश्यत् । अयतत । असर्पत् । अतरत् ।

**प्रश्नाः**—कुत्र अवसत् सः कविः ? कः तस्य कवेः प्रियः ? क्व अनयत् कविः तम् ? किमपश्यत् कविः तडागे ? कीदृशः वर्णः कमलस्य ? कमलं ग्रहीतुं कथं प्रयत्नः कृतः कविना ? तदा सारमेयः किमकरोत् ?

**सन्धिः**—कानि व्यञ्जनानि मृदूनि कानि च कठोराणि सन्ति ? तडागात् आनीतम् = तडागादानीतम् । वाक् ईश्वरः = वागीश्वरः । तत् वचनम् = तद्वचनम् । षट् बान्धवाः = षड्बान्धवाः । तत् दृष्ट्वा = तद् दृष्ट्वा । [ व्यञ्जनं + स्वरः अथवा मृदुव्यञ्जनं = तद्वर्गस्थतृतीयव्यञ्जनम् ] तस्मात् मुनिः = तस्मान्मुनिः, तस्माद्मुनिः । षट् मासाः = षण्मासाः, षड्मासाः । वाक् मनोरथम् = वाङ्मनोरथम्, वाग्मनोरथम् । [ व्यंजनं + अनुनासिकं = तृतीयं मृदु व्यंजनं वा अनुनासिकं वा । ]

| **पदनिर्णयः**–( नामानि ) | ( विशेषणानि ) |
|---|---|
| कविः–तडागः–यष्टिः– | दीर्घा–चतुरः–विफलः– |
| सारमेयः–तरङ्गः–प्रयत्नः– | विस्तृतः–मनोहरम्–विशाला– |
| कमलम्–शिला–पवनः । | शीतलः–रसज्ञः–अल्पः । |

( युक्तार्थैः विशेषणैः तानि तानि नामानि क्रमशः संयोजयत । )

---

# विंशः पाठः ।

## भागीरथी ।

**अहो पावनी भगवती भागीरथी । पुण्यं गङ्गायाः दर्शनं नामस्मरणमपि । किं पुनः अस्याः निर्मले जले स्नानम् । हिमालयाद्गङ्गानदी प्रभवति । तदुद्गमस्थानमाच्छादितं सर्वतः हिमेन । प्रथमं पश्चिमां दिशां प्रति सा किंचिदन्तरं वहति । तत्र तस्याः प्रवाहः अल्पः विद्यते । अनन्तरं दक्षिणां दिशमुद्दिश्य सा महता वेगेनावतरति हिमालयात् । तत्र शुभ्रेभ्यः प्रस्तरेभ्यः तस्याः जलौघः पतति अधः शुभ्रेषु प्रस्तरेषु । एतादृशाः वहवः प्रपाताः तत्र दृश्यन्ते । बहुरमणीयाः ते क्षिपन्ति जलस्य तुषारानितस्ततः कुर्वन्ति च महान्तं रवम् ।**

**अग्रे पूर्वां दिशं प्रति परिवर्तते गङ्गायाः प्रवाहः । तत्र समभूमिं सा प्राप्नोति बहूनि अन्यानि स्रोतांसि च तया सङ्गच्छन्ते । तस्मिन् स्थले गङ्गायाः पात्रमायतं भवति । जनाः तस्याः जलं कुल्याभिः क्षेत्राणि नयन्ति । अनेन प्रकारेण उभयतः प्रदेशान् सा समृद्धान् करोति सस्यादिभिः । ग्रीष्मकाले अपि जलेन पूर्णमस्ति गङ्गायाः पात्रम् । वाराणसी प्रयागः कान्य-कुब्जमित्यादीनि समृद्धानि नगराणि अस्याः नद्याः तीरे वर्तन्ते । पवित्राणि एतानि क्षेत्राणि प्रतिवर्षमागच्छन्ति भारतीयाः । प्रसिद्धा यमुना नदी प्रयागे गङ्गया सङ्गच्छते ।**

तत्र यमुनायाः नीलं जलं गङ्गायाः च शुभ्रं जलं सम्मिलतः। बहु-मनोहरः दृश्यते सः सङ्गमः। अनयोः प्रदेशे पुरा श्रीरामेण श्रीकृष्णेन च यद् किमपि अलौकिकं चेष्टितं तत्सर्वं जनाः स्मरन्ति। अहो पावनं तस्य श्रवणं स्मरणं च। ततः शनैः शनैः तं तं प्रदेशं भागीरथी आक्रामति वङ्गदेशे च पुनः भवति दक्षिणवाहिनी। तत्र पूर्वसागरं सा प्राप्नोति। तद् तस्याः मुखं शोभते बहुभिः प्रवाहैः। वङ्गदेशे गङ्गायाः पात्रं बहु

विततं गभीरं च वर्तते। तत्र सञ्चरन्ति अग्निनौकाः इतस्ततः। तत्साधनैः जनाः वाणिज्यं कुर्वन्ति। गङ्गायाः गभीरे जले वसन्ति मत्स्याः कूर्माः मकराः इति बहुविधाः प्राणिनः।

पिबन्ति नद्यः स्वयमेव नाम्भः। स्वयं न खादन्ति फलानि वृक्षाः॥
नादन्ति सस्यं खलु वारिवाहाः। परोपकाराय सतां विभूतयः॥ १॥

गङ्गा पापं शशी तापं दैन्यं कल्पतरुस्तथा ।
पापं तापं च दैन्यं च हरति श्रीपतेः पदम् ॥ २ ॥

---

भागीरथी । उद्गमः । प्रस्तरः । प्रपातः । सङ्गमः । आगच्छति । उद्गच्छति । सङ्गच्छते । परिवर्तते ।

**प्रश्नाः**—कस्मात् प्रभवति गङ्गा नदी? कानि अन्यानि गङ्गायाः नामानि। किमर्थं भागीरथी जान्हवी च इति सा प्रसिद्धा? कुत्र दृश्यते गङ्गायाः प्रपातः? कानि नगराणि भागीरथ्याः तीरेषु? कः देवः गङ्गां मस्तके वहति?

**सन्धिः**—तत् तत्र = तत्तत्र। एतत् च = एतच्च । तत् चक्रम् = तच्चक्रम्। यत् जलम् = यज्जलम्। महत् जालम् = महज्जालम्। तत् सर्वम् = तत्सर्वम् । एतत् पात्रम् = एतत्पात्रम्। तत् शुभ्रम् = तच्छुभ्रम्।

**सन्धि-वियोजनम्**—एतत्स्थानमेव पवित्रम्। यज्जलं गङ्गायाः पात्रे वहति तच्छुभ्रमस्ति । किंचिदन्तरं सा तस्मात्पर्वताद्वहति । दक्षिणां दिशमुद्दिश्य गङ्गा हिमालयादवतरति। महत्पात्रमग्रे गङ्गायाः।

**लेखनमालेखनं च**—प्रपातं, सङ्गमं, कुल्यां च आलिखत वर्णयत च।

**पदनिर्णयः**—विरुद्धार्थानि पदानि कथयत यथाक्रमम्।

| | |
|---|---|
| प्रकाशः–अधः–शुभ्रम्– | प्रबुद्धा–शत्रुः–मारयति– |
| स्वतन्त्रः–सुप्ता–कातरः– | अन्धकारः–धीरः–प्राणयति– |
| मित्रम्–प्रभूतः–स्वामी– | अल्पः–ऊर्ध्वम्–परतन्त्रः– |
| मज्जति–रक्षति–कोपयति। | कृष्णम्–दासः–तरति। |

---

# एकविंशः पाठः ।

## भ्रातृ-भगिन्योः संवादः ।

भ्राता—अयि आर्ये, श्रान्तः अस्मि अहं पठनेन । अधुना क्रीडावः कंचित्कालम् ।

भगिनी—तेन हि आगच्छ वत्स । अत्र उद्याने इतस्ततः स्वैरं विहरावः ।

भ्राता—साधु उक्तं भवत्या । तत्रैव शीतलं स्थलं गच्छावः ।

भगिनी—वत्स, पश्य एतानि सुगन्धीनि जपापुष्पाणि ।

भ्राता—अहो विविधाः मनोहराः च एतेषां वर्णाः । द्वे पुष्पे अहं लुनामि । एकं तुभ्यं दास्यामि अन्यच्च भविष्यति मदर्थम् । कः नु वर्णः रोचते तुभ्यम् ?

भगिनी—न एतद्युक्तम् । वत्स मा एवं कुरु । पुष्पाणां दर्शनेन सुगन्धेन च प्रीता अस्मि । ईश्वरस्य पूजनार्थमेतानि पुष्पाणि श्वः प्रभाते लुनीवः ।

भ्राता—किमर्थं न अधुना ? बहु रोचते खलु मह्यमेतदारक्तं जपापुष्पम् ।

भगिनी—अपि न स्मरसि यत्पितृचरणाः अस्मान् प्रतिदिन-मुपदिशन्ति ।

भ्राता—किमिति । कः नाम तस्य अत्र सम्बन्धः ?

भगिनी—'सर्वाणि वस्तूनि प्रथममीश्वराय अर्पय । अनन्तरं तानि त्वं सुखेन सेवस्व' इति ।

भ्राता—दिष्ट्या सम्यग्बोधितः अस्मि अहं भवत्या । नाहमधुना एकमपि पुष्पं प्रथमं गृह्णामि ।

भगिनी—एवमेतद् । एषः एव सदाचारः । पश्य, तस्मिन्नाम्रवृक्षे कूजन्ति बहवः खगाः ।

भ्राता—अहो कलकलः खगानाम् । किमर्थं नु ते एतादृशं रवं कुर्वन्ति ?

भगिनी—एषः सन्ध्याकालः वर्तते । खगाः अस्मिन् समये गृहमागच्छन्ति । तान् दृष्ट्वा तेषामपत्यानि सहसा एव कुर्वन्ति कलकलम् । तत्रैव तावद् गच्छावः ।

भ्राता—किमानयन्ति ननु खगाः गृहम् ?

भगिनी—किमपि खाद्यम् । धान्यकणान् कीटकान् वा ।

भ्राता—कस्मै प्रयच्छन्ति ते तत्खाद्यम् ?

भगिनी—नूनमात्मनः अपत्येभ्यः । पश्य, अस्यां शाखायामेतत् कपोत्याः नीडम् ।

भ्राता—अहो रुचिरमेतन्नीडम् । किं करोति एषा कपोती ?

भगिनी—इयमात्मनः अपत्येभ्यः धान्यकणान् यच्छति । इयं खलु तेषां माता । यथा आवयोः अम्बा आवाभ्यामन्नं प्रयच्छति तथैव करोति इयम् ।

भ्राता—अहो वात्सल्यं कपोत्याः स्वेषु अपत्येषु । अथ कीदृशाः एते शावकाः कीदृशं च एतन्नीडम् ? द्रष्टुमिच्छामि तत्सर्वम् । अधुनैव अहं वृक्षमारोहामि नीडं च आनयामि ।

भगिनी—मा मा एवम् । न एतद्युक्तं वत्स । दूरतः एव त्वमेतत्सर्वं पश्य । मा पीडय एतान् खगान् ।

भ्राता—कथं नु एतेषां पीडा भविष्यति ?

भगिनी—एतन्नीडमेतेषां खगानां गृहमेव विद्यते। एतानि कपोत्याः अपत्यानि मा स्पृश । 'कमपि प्राणिनं मा पीडय' इति सततं पितृचरणाः अस्मानुपदिशन्ति । अपि नाम विस्मृतं तत् त्वया ?

भ्राता—दिष्ट्या सम्यग्बोधितः अस्मि अहं भवत्या । उपकृतः खलु अस्मि। इतः परं न कदापि अहं कमपि प्राणिनं पीडयिष्यामि। सर्वथा ताताज्ञामनुवर्तिष्यामि।

भगिनी—एवमेतद्। एषः एव सदाचारः। एहि वत्स अधुना अस्यां शिलायामुपविशावः ईशस्तवनं च कुर्वः।

## पठनम्

कस्यचित् किमपि नो हरणीयं मर्मवाक्यमपि नोच्चरणीयम्।
श्रीपतेः पदयुगं स्मरणीयं लीलया भवजलं तरणीयम् ॥ १ ॥
गेयं गीतानामसहस्रं ध्येयं श्रीपतिरूपमजस्रम्।
देयं दीनजनाय च वित्तं नेयं सज्जनसङ्गे चित्तम् ॥ २ ॥
रे रे कोकिल मा भज मौनं किंचिदुदञ्चय पञ्चमरागम्।
नोचेत्त्वामिह को जानीते काकसमूहैः पिहिते चूते ॥ ३ ॥

---

भगिनी । भ्राता । विहगः । कलकलः । नीडम् । उपदिशति । सेवते । यच्छति । विहरति ।

**सन्धिः**—अत्र अहम् = अत्राहम्। यदा अन्यः = यदान्यः। अत्र आगच्छ = अत्रागच्छ। मा आनय = मानय। इति इच्छा = इतीच्छा। स्मरसि ईश्वरम् = स्मरसीश्वरम्। साधु उक्तम् = साधूक्तम्। भानु उदयः = भानूदयः। मातृ ऋणम् = मातॄणम्। [ स्वरः + समानः स्वरः = दीर्घः स्वरः । ]

**सन्धिवियोजनम्**—अधुनार्ये श्रान्तः अहमस्मि पठनेन। कुल्याने विहारम्। प्रतिदिनमुपदिशति अम्बास्मान्। सः पुष्पमानयतीश्वरस्याराधनार्थम्। एवमेतद्भवती-

श्वरस्य प्रियम्। सम्यग्बोधितः अहमस्मि भवत्या। बहूपकृतः अहमेतेन उपदेशेन। खगस्य तन्नीडमहमानयामीति नास्ति साधूद्देशः। तस्मिन्नस्ति खगस्यापत्यमिति मन्ये।

**पदनिर्णयः**—युक्तार्थैः पदैः वाक्यानि रचयत।—

| | |
|---|---|
| ( १ ) विहगाः | (   ) मण्डपे दोलायन्ते। |
| ( २ ) कुक्कुराः | (   ) नदीषु सञ्चरन्ति। |
| ( ३ ) सिंहाः | (   ) वृक्षेषु कूजन्ति। |
| ( ४ ) द्राक्षाफलानि | (   ) गृहेषु भषन्ति। |
| ( ५ ) अग्निनौकाः | (   ) वनेषु गर्जन्ति। |

**नाट्यम्**—उपरि निर्दिष्टः संवादः द्वाभ्यां कुमाराभ्यां नाट्यः। किं योग्यम्-बालकस्य जिज्ञासा अथवा बालिकायाः उपदेशः।

---

# द्वाविंशः पाठः।

## गजः।

गजः अतीव तुङ्गः स्थूलः च वर्तते। न कोऽपि अन्यः पशुः एतादृशः स्थूलः। सः वने वसति तृणानि पर्णानि च भक्षयति। तस्य चत्वारः पादाः स्तम्भवत् पीवराः दृश्यन्ते। लाङ्गूलं तु ह्रस्वं कृशं च। तस्य कर्णौ विशालौ परं नेत्रे लघुनी स्तः। पुरतः महासर्पवत् लम्बते शुण्डा। सा एव तस्य नासिका। शुण्डया गजः श्वसिति आहरति च जलम्। शुण्डायाः अग्रेण सः तृणानि पर्णानि च उद्धरति प्रवेशयति च मुखे। अतः शुण्डा गजस्य करः हस्तः वा इति उच्यते। तस्मात् ‘करी, हस्ती, द्विपः’ इति अस्य अन्यानि नामानि प्रसिद्धानि। गजस्य मुखात् द्वौ रदौ अग्रतः वर्तेते। अतः ‘द्विरदः’ इति अपरमस्य नाम प्रसिद्धम्। रदः श्वेतः कठिनः च वर्तेते। तस्य कोटिः सुतीक्ष्णा। गजस्य वर्णः श्यामः। सर्वेषु पशुषु सः अत्यन्तं धीरः मनस्वी च भवति।

अथ कदाचित् काचन स्त्री प्रस्थिता एकस्मान्नगरादन्यन्नगरम्। तस्याः मस्तके आसीत् करण्डः। तस्मिन् करण्डे तया बालकः स्थापितः। सा नारी शनैः शनैः मार्गेणागच्छत्। तस्मिन् मार्गे दृष्टं तया निविडं किमपि वनम्। प्रवासेन श्रान्ता सा कस्यचिद् वृक्षस्य

छायायामुपाविशत् करण्डं च भूमौ अस्थापयत्। बालकस्य मुखं सस्मितं दृष्ट्वा भृशमानन्दिता सा तमचुम्बत्। तेन एवापनीतः तस्याः श्रमः। यावत् सा बालकेन सह किंचित् क्रीडति तावदेव कोऽपि गजः दूरात्तया दृष्टः। महता वेगेन धावन् सः तत्रागतः। भीतिग्रस्ता सा स्त्री दूरं पलायत बालकं च तत्र एवात्यजत्। गजः करण्डस्य समीपमागतः। तं सुकोमलं बालकं दृष्ट्वा सः शुण्डाग्रेणास्पृशत् सकुतूहलम्। सस्मितं बालकस्य वदनं वीक्ष्य भृशं प्रमुदितः सः द्विरदः तेन सहाक्रीडत्। किमपि पर्णं करेण धृत्वा

सः तेन तमुपवीज्यानन्दयत्। सः बालकः अपि तत् पर्णं हस्तेनादाय गजेन सहाक्रीडत्।

आश्चर्यं खलु इदं यदेतादृशः बलिष्ठः वन्यपशुः तं बालकं न किंचिदपि अपीडयत्। अहो अज्ञेया ईश्वरेच्छा। नूनं कल्पनातीतं जगत्पतेः प्रेरणम्।

द्विरदः। शुण्डा। पीवरः। मनस्वी। करण्डः। लम्बते। प्रवेशयति। चुम्बति। वीजयति।

**प्रश्नाः**—कुत्र वसति गजः? किमर्थं सः द्विरदः इति उच्यते? किं भक्षयति गजः? कुत्र गन्तुं प्रस्थिता सा स्त्री? किमवहत् सा मस्तकेन? केनापनीतः तस्याः श्रमः? किमकरोत् गजः करण्डं दृष्ट्वा?

**प्रयोगाः**—(अधोगत-वाक्येषु अर्थपोषकं 'परं'-'च'-'वा'-'अपि'-इति एकैकं पदं प्रयोजयत।)

(१) किं रोचते गजाय? तृणं मांसं ___। किं भक्षयति (गजः)? तृणं मांसं ___।

(२) गजस्य शुण्डा दीर्घा ___ ग्रीवा ह्रस्वा।

(३) साधवः शत्रुषु ___ स्निह्यन्ति।

(४) शुकः कोकिलः ___ मधुरं कूजति। शुकः ___ कोकिलः ___ मधुरं कूजति।

**क्रियाविशेषणानि**—१. यद्यपि वारणः ___ स्थूलः तथापि सः ___ धावति।

२. तन्नगरं ___ वर्तते। तेन सा स्त्री ___ श्रान्ता।

३. बालकस्य मुखं दृष्ट्वा ___ प्रमुदिताभवत् सा नारी।

४. वारणः शुण्डया पर्णं ___ चालयति।

# त्रयोविंशः पाठः ।

## उष्ट्रः ।

अहो तुङ्गः एषः पशुः । उष्ट्रः गजवत् तुङ्गः न तु तादृशः स्थूलः । उष्ट्रस्य वर्णः धूसरः वर्तते । चत्वारः अस्य पादाः दीर्घाः । ग्रीवापि दीर्घा । गजस्य ग्रीवा ह्रस्वा विपुला च विद्यते । तस्मात्तस्य शुण्डा दीर्घा । उष्ट्रस्य शुण्डा नास्ति । तस्मादस्य ग्रीवा दीर्घा कृशा च ।

उष्ट्रस्य मुखं विरूपम् । ओष्ठौ विपुलौ अधः लुठतः । नासापुटे आयते कर्णौ च ह्रस्वौ । अस्य पृष्ठे बृहन् मांसपिण्डः वर्तते । उष्ट्रः तृणानि

पर्णानि च खादति । मार्गेण यदा सः गच्छति तदा भक्षयति पार्श्व-स्थानां वृक्षाणां पर्णानि । पिबति च प्रभूतं जलं सकृदेव ।

उष्ट्रः अतीव सौम्यः पशुः । उपयुक्तः च वालुकामये प्रदेशे । तत्र ये जनाः पर्यटन्ति तेषां न किमपि अन्यद्वाहनं वर्तते । उष्ट्रः एव भवति तेषां वाहनम् । वणिजः पण्यानि द्रव्याणि उष्ट्रस्य पृष्ठे स्थापयन्ति वालुकाप्रदेशं च उल्लङ्घयन्ति तस्य साहाय्येन । तत्र जलमतीव दुर्लभम् । वृक्षाः अपि विरलाः । सर्वत्र शुष्काः वालुकाः एव प्रसृताः । मध्याह्ने सूर्यस्यातपेन प्रतप्ताः भवन्ति वायुः वालुकाः च । असह्या भवति सा प्रचण्डा उष्णता । तदाऽऽश्रयते पथिकः उष्ट्रस्य च्छायाम् । यदा सः तृषितः भवति तदा भिनत्ति उष्ट्रस्य उदरं पिबति च तस्माज्जलम् । मरुस्थले कदाचिज्झञ्झावातः प्रभवति । तेन उद्धूताः सिकताः पथिकान् पीडयन्ति । क्वचिद् विलुठन्ति सिकतामयाः उत्तुङ्गाः स्तम्भाः । तेषु निगूढाः भवन्ति दैवहताः प्राणिनः । एभिः प्रकारैः बहु भीषणं जायते मरुस्थलम् । अस्मात्सङ्कटाद्दैवेन रक्षिताः ये निष्क्रामन्ति ते अन्यस्मिन् दिने मृगजलेन भवन्ति विमूढाः । सूर्यस्यातपेन तप्ताः वायोः तरङ्गाः इतस्ततः चलन्ति । तान् जलमिति मत्वा बहवः प्राणिनः धावन्ति तत्प्राप्तुम् । परं न कदापि लभन्ते जलम् । अहो कष्टमयं जीवितं मरुस्थले । तत्र उष्ट्रः एव जनानां सुशीलः सहायः विद्यते ।

परोपकाराय फलन्ति वृक्षाः परोपकाराय वहन्ति नद्यः ।
परोपकाराय दुहन्ति गावः परोपकारार्थमसौ महाङ्गः ॥ १ ॥

उष्ट्राणां लग्नवेलायां गर्दभाः स्तुतिपाठकाः ।
परस्परं प्रशंसन्ति अहो रूपमहो ध्वनिः ॥ २ ॥

---

उष्ट्रः । वालुका । मरुस्थलम् । झञ्झावातः । मृगजलम् । लुठति । पर्यटति । उल्लङ्घयति । आश्रयते । । निष्क्रामति ।

**प्रश्नाः**—किमन्तरं गजस्य उष्ट्रस्य च ? किमुष्ट्रस्य खाद्यम् ? कुत्रास्ति मरुस्थलं भरतवर्षे ? किं वाहनं योग्यं तत्र ? कस्मात्कारणात् ? कथमुद्भवति झञ्झावातः ? कथ-मुद्भवति मृगजलम् ?

**सन्धिः**—न इदम् = नेदम् । अत्र ईश्वरः = अत्रेश्वरः । वालुका इयम् = वाकेलु-यम् । ग्रीवा ईदृशी = ग्रीवेदृशी [ अ, आ + इ, ई = ए । ] तत्र उष्ट्रः = तत्रोष्ट्रः । अतीव उपयुक्तः = अतीवोपयुक्तः । वालुका उष्णा = वालुकोष्णा । तदा उत्तिष्ठति = तदोत्तिष्ठति [ अ, आ + उ, ऊ = ओ । ] वेद ऋचा = वेदर्चा । ब्रह्म ऋषिः = ब्रह्मर्षिः [ अ, आ + ऋ, ऋ = अर् । ] तत्र एषः = तत्रैषः । एकदा एव = एकदैव । मत ऐक्यम् = मतैक्यम् । न ऐहिकम् = नैहिकम् [ अ, आ + ए, ऐ = ऐ ] । जल ओघः = जलौघः । तदा ओघः = तदौघः । नव औषधम् = नवौषधम् । एकदा औषधम् = एकदौषधम् [ अ, आ + ओ, औ = औ । ]

**सन्धिवियोजनम्**—प्रभूतं जलमेकदैवोष्ट्रः पिबति । नैतन्मरुस्थलं न चेदं मृगजलं मुम्बापुर्याम् । वालुकेयमतीवोष्णा सूर्यस्यातपेन भवति । तत्रर्षिः इव शान्तः उष्ट्रः जलौघं दृष्ट्वा नोत्सुकः । नोपयुक्तः सः जलौघः ।

**प्रयोगाः**—युक्तार्थैः पदैः वाक्यानि रचयत ।

| | | | |
|---|---|---|---|
| यदा | १. उष्ट्रः मार्गेण गच्छति | तदा | ( ) खगाः कूजन्ति । |
| | २. पथिकः तृषितः भवति | | ( ) सा स्त्री दूरं पलायत । |
| | ३. वायुः तप्तः भवति | | ( ) पार्श्वस्थानां वृक्षणां पर्णानि भक्षयति । |
| | ४. सूर्यः उदेति | | ( ) स उष्ट्रस्य उदराद् जलं पिबति । |
| | ५. गजः समीपम् आगतः | | ( ) मृगजलं दृश्यते । |

# चतुर्विंशः पाठः ।

## गुरुशिष्याणां संवादः ।

गुरुः—अयि भोः प्रियच्छात्राः, अद्याहं युष्मान् समुद्रस्य तीरं नेतुमिच्छामि । तत्र च युष्मभ्यं कथयामि समुद्रमुद्दिश्य कंचिद् वृत्तान्तम् ।

शिष्याः—तथा । यदिच्छन्ति भवन्तः तदेवास्माकं प्रियं हितं च । गुरुचरणान् वयमनुसरामः ।

ततः प्रस्थिताः ते सर्वे समुद्रस्य तीरम् । क्रमशः मार्गेण गच्छन्ति ते छात्राः । यथा सैनिकानां पङ्क्तयः क्रमेण चलन्ति तथैव छात्राणां पङ्क्तयः मार्गेण चलन्ति । ताः दृष्ट्वा जनाः वदन्ति । 'अहो विनीताः खलु एते बालवीराः । एतेषां वेषाः दृश्यन्ते सुपरिहिताः । पदानि क्रमशः समकालं भूमौ पतन्ति । वदनानि च प्रसन्नानि प्रतिभान्ति । गुणवान् खलु एतेषां गुरुः' इति । अनन्तरं ते सर्वे समुद्रतीरं प्राप्ताः तत्रैव च कस्यचित्तरोः छायायामुपविष्टाः ।

शिष्याः—अहो शीतलमेतत्स्थलम् । अहो विशालः अयं सागरः ।

गुरुः—समुद्रस्य किंचिज्जलं हस्तेन गृहीत्वा यूयं सर्वे तदास्वादयध्वम् ।

शिष्याः—( जलं पीत्वा ) हन्त, क्षारं समुद्रस्य जलम् ।

गुरुः—कीदृशं जलं वयं प्रतिदिनं पिबामः ?

शिष्याः—तन्मधुरम् । किमर्थं तर्हि एतत्क्षारम् ?

गुरुः—किं वर्तते पृथिव्याः उदरे ?

शिष्याः—बहवः खनिजाः पदार्थाः । लोहं सुवर्णं रौप्यं ताम्रं सैन्धवमित्यादयः ।

गुरुः—एवमेतद् । सैन्धवं नाम क्षारविशेषः । अन्ये च बहवः क्षाराः सन्ति पृथिव्याः उदरे । ते समुद्रस्य जले द्रवन्ति । तेन चैतज्जलं क्षारं भवति ।

शिष्याः—ज्ञातं खलु एतदस्माभिः अधुना । समुद्रस्य पृष्ठभागः न कदापि निश्चलः । सततं तरङ्गाः तत्र विलुठन्ति ।

गुरुः—सत्यमेतद् । यथा मनुजस्य चित्तं न कदापि निश्चलं तथैव समुद्रस्य पृष्ठभागः । अपि ज्ञातं तस्य कारणं युष्माभिः ?

शिष्याः—ज्ञातं खलु । वायुः वहति । तेन चलति समुद्रस्य जलं समुद्भवन्ति च तरङ्गाः ।

गुरुः—साधूक्तं युष्माभिः । अपरं च पश्यत । एते तरङ्गाः अत्र समुद्रस्य तीरे लघवः किन्तु मध्यप्रदेशे तुङ्गाः भवन्ति ।

शिष्याः—हन्त भोः । भीषणं खलु तद् स्वरूपं स्यात् ।

गुरुः—यतः किल तद्युष्माकं परिचितं नास्ति । नाविकानां कुमाराः तु रमन्ते तत्र सदैव ।

शिष्याः—पश्यत भोः, तत्र जलस्य भीषणं विक्षेपम् ।

गुरुः—बाढम् । तत्र वर्तते कश्चिन्मकरः । समुद्रस्य जले मत्स्याः मकराः च सन्ति ।

शिष्याः—नद्यामपि मत्स्याः मकराः च सन्ति ।

गुरुः—यथार्थमालोचितं कुमारैः । परं ते क्षुद्राः जलचराः । समुद्रे तु स्थूलाः जलचराः सन्ति । समुद्रे केचित् कूर्माः महाप्रस्तराः इव दृश्यन्ते ।

शिष्याः—कोऽपि नाविकः नु तेन वञ्चितः भवेत् ।

गुरुः—बाढम् । काश्चित् कथाः वर्तन्ते तदुद्दिश्य । कथयिष्यामि

कांचन कथामपरस्मिन् समये। तिमिङ्गिलः नाम अपरः महान् जलचरः समुद्रे वसति। महापोतवत्तस्य विशालं शरीरम्। पश्यतैतत् तिमिङ्गिलस्य चित्रम्।

शिष्याः—अहो विशालः तिमिङ्गिलस्याकारः। जले गजः इव अयं प्लवते इति मन्यामहे।

गुरुः—सम्यगुक्तं कुमारैः। सागरे अयं गजः इव भाति।

शिष्याः—किं नु खलु एतदूर्ध्वं निःसरति तिमिङ्गिलस्य मस्तकात्।

गुरुः—अयं किल जलोत्क्षेपः कृतः तिमिङ्गिलेन। अन्यच्च समुद्रे नक्राः बहवः सर्पाः च वसन्ति। पश्यतैनं नक्रम्।

शिष्याः—अहो उग्रमस्य रूपम। अस्य दंष्ट्राः निशिताः। समुद्रे सर्वं खलु भीषणं विद्यते इति मन्यामहे।

गुरुः—नहि नहि। अत्र किंचिन्मनोज्ञमपि वर्तते। ननु एता शुक्तिं पश्यत।

शिष्याः—अहो उज्ज्वलैषा शुक्तिः। नूनं मनोज्ञाऽस्याः आकृतिः दिष्ट्या बहवः शुक्तयः अस्मिन् तीरे दृश्यन्ते।

गुरुः—यूयं चिनुत काश्चिच्छुक्तीः ।

शिष्याः—अत्र केचिदन्येऽपि पदार्थाः सन्ति ।

गुरुः—ते हि शङ्खादयः ।

शिष्याः—कथमुद्भवन्ति शङ्खाः शुक्तयः च सागरे ?

गुरुः—शम्बूकाः कुलीराः चेति क्षुद्राः प्राणिनः जले वसन्ति । तेषामेते कोशाः । अयं प्रवालः तु क्षुद्रैः जन्तुभिः रचितं गृहमेव । काश्चिच्छुक्तयः किमप्यनर्घं वस्तु वितरन्ति । किं तद् ?

शिष्याः—मौक्तिकं मौक्तिकं खलु । तस्य वर्णः विभाति शुक्तेः वर्णवद् ।

गुरुः—एवमेतद् । अतः एव किल रत्नाकरः सागरः । एतदेवास्य मनोज्ञं रूपम् । भवतु । पश्यत भोः, तत्रास्तं गच्छति सूर्यः । नमामः तं दिनराजम् ।

शिष्याः—दिनराजं सूर्यदेवं नमामः । अहो रक्तं विशालं च तस्य बिम्बम् । सागरस्य जले सः मज्जतीति मन्यामहे ।

गुरुः—एतदपि रमणीयं स्वरूपं सागरस्य । अस्तु । अधुना सन्ध्याकालः संजातः । स्वगृहं तावद् गच्छामः ।

शिष्याः—गुरुभ्यो नमः । भवतां कृपयैव खल्वेतज्ज्ञानं सुखेनाधिगतमस्माभिः ।

गुरुः—स्वस्ति प्रियकुमारेभ्यः ।

रत्नाकरः किं कुरुते स्वरत्नैर्विन्ध्याचलः किं करिभिः करोति ।
श्रीखण्डखण्डैर्मलयाचलः किं परोपकाराय सतां विभूतयः ॥ १ ॥

---

सागरः। सुवर्णम्। सैन्धवम्। तिमिङ्गिलः। मौक्तिकम्। आस्वादयते। प्लवते। मन्यते। विभाति।

**सन्धिः**—गच्छामि अहम् = गच्छाम्यहम्। नदी अपि = नद्यपि। राक्षसी आगता = राक्षस्यागता। रवि उदयः = रव्युदयः। भगिनी एषा = भगिन्येषा। भागीरथी ओघः = भागीरथ्योघः।

[ इ + अ = य; इ + आ = या; इ + उ = यु; इ + ए = ये; इ + ओ = यो ]।

बहु अन्तरं = बह्वन्तरं। गुरु आज्ञा = गुर्वाज्ञा। स्वादु इक्षुदण्डम् = स्वाद्विक्षुदण्डम्। मधु एतत् = मध्वेतत्। साधु ओदनम् = साध्वोदनम्। स्वादु औषधम् = स्वाद्वौषधम्।

[ उ + अ = व; उ + आ = वा; उ + इ = वि; उ + ए = वे; उ + ओ = वो ]।

मातृ अङ्कः = मात्रङ्कः। पितृ इच्छा = पित्रिच्छा। भ्रातृ उद्यानम् = भ्रात्रुद्यानम्।

[ ऋ + अ = र; ऋ + इ = रि; ऋ + उ = रु ]

एते अधिपतयः = एतेऽधिपतयः। आकाशे अस्तम् = आकाशेऽस्तम्। मार्गे आगता = मार्गयागता = मार्ग आगता। मरुस्थले उष्ट्रः = मरुस्थलयुष्ट्रः = मरुस्थल उष्ट्रः। शालायै आनीताः = शालायायानीताः = शालाया आनीताः। हस्ते औषधम् = हस्तयौषधम् = हस्त औषधम्। मालायै उद्धृतानि = मालायायुद्धृतानि = मालाया उद्धृतानि ( कुसुमानि )।

[ ए + अ = एऽ। ए + आ = अया = अ आ। ए + इ = अयि = अ इ। ए + उ = अयु = अ उ। ऐ + अ = आय; ऐ + आ = आया; ऐ + इ = आयि; ऐ + उ = आयु ]

भोः गुरो अहं = भो गुरो अहं। भोः विष्णो एहि = भो विष्णवेहि। हस्तौ उद्धर = हस्तावुद्धर। द्वौ अपि = द्वावपि।

[ ओ + अ = ओऽ; ओ + आ = अवा; ओ + इ = अवि; ओ + उ = अवु। ]

[ औ + अ = आव; औ + आ = आवा; औ + इ = आवि; औ + उ = आवु। ]

**प्रयोगाः**—युक्तार्थैः पदैः वाक्यानि रचयत।

| | | | |
|---|---|---|---|
| यत्र | १. सागरः वर्तते | तत्र | ( ) उष्ट्राः वाहनं भवन्ति। |
| | २. जलं गभीरं वर्तते | | ( ) खगाः नीडानि रचयन्ति। |
| | ३. सिकताः प्रसृताः | | ( ) शुक्तयः दृश्यन्ते। |
| | ४. गहनं वनं विद्यते | | ( ) नाविकाः सञ्चरन्ति। |
| | ५. वृक्षाः रोहन्ति | | ( ) हिंस्राः पशवः वसन्ति। |

**पठनम्** :—अधः करोषि रत्नानि मूर्ध्ना धारयसे तृणम् ।
दोषस्तवैष पाथोधे रत्नं रत्नं तृणं तृणम् ॥ १ ॥
ग्रावाणो मणयो हरिर्जलचरो लक्ष्मीः पयोमानुषी
मुक्तौघाः सिकताः प्रवाललतिकाः शैवालमम्भः सुधा ।
तीरे कल्पमहीरुहाः किमपरं नाम्नापि रत्नाकरो
दूरे कर्णरसायनं निकटतस्तृष्णापि नो शाम्यति ॥ २ ॥

---

# पञ्चविंशः पाठः ।

## वायसशृगालयोः ।

अथैकदा कश्चिद्वायसः कुतश्चिन् मांसखण्डमलभत । एनं मांसखण्डमधुना सुखेन भक्षयामीति सः अचिन्तयत् । ततः च कस्याप्याम्रवृक्षस्य शाखायामुपाविशत् । तस्मिन्नेव काले तत्रागच्छत् कश्चिच्छृगालः । अपश्यच्च तं वायसं मांसखण्डं च। 'अहो सरसः अयं मांसखण्डः। वृक्षस्थाद्वायसात्तं कथमपि हरामि । कः खलूपायः कर्तव्यः अत्र ?—भवतु एवं करोमि ' इत्यचिन्तयत् सः जम्बूकः । तदनुरोधात् सः वायसं शाठ्येनावर्णयत्। 'अयि रमणीय विहगराज । किमप्यपूर्वं तव लावण्यम्। न कदापि मया त्वत्सदृशः विहगः पुरा दृष्टः। अतीव मनोज्ञः तव वर्णः सुरूपा च चञ्चुः। तव गतिः अपि बहु मनोहरा वर्तते । तथैव तव स्वरः अपि मधुरः स्यादिति मे तर्कः। तव मधुरं गानं श्रोतुमिच्छामि। कृपया तर्हि गीयतां मधुरालापैः। तेन प्रीतः अहं गच्छामि गृहम्' इति। एतां मिथ्यास्तुतिं श्रुत्वा वायसः आत्मनः यथार्थं रूपं गतिं स्वरं च व्यस्मरत्। तस्यां शाखायां च प्रथममितस्ततः अनृत्यत्। तेन नृत्येन प्रीतः जम्बूकः वदति स्म। 'अहो सत्यमेव मनोहरं तव नृत्यम्। एतादृशं नृत्यं कर्तुं मयूरः अपि न समर्थः। नूनं नृत्यवत्तव गानमपि

मनोहरं स्यादिति मे तर्कः। कोकिलः अपि त्वादृशं गातुं न समर्थः इत्यहं मन्ये। तर्हि हे रम्य विहग कृपया गायताम्' इति। तत्क्षणं

वायसः गातुं प्रारभत। सपद्येव तस्य विवृतान्मुखाद् भूमौ पतितः मांसखण्डः। सत्वरं च ग्रसितः शृगालेन। अहो धूर्तः जम्बूकः। अहो मूढः वायसः।

---

शृगालः। मांसखण्डः। मनोज्ञः। जम्बूकः। धूर्तः। अलभत। अपश्यत्। अवर्णयत्। अनृत्यत्।

**प्रश्नाः**—किमलभत सः वायसः? कुत्रोपाविशत् तदा सः? कः अपश्यत् तम्? किमचिन्तयत् सः जम्बूकः? कीदृशी सा स्तुतिः? किमकरोत् स वायसः तदा? कीदृशः स्वभावः शृगालस्य काकस्य च?

**सन्धि-वियोजनम्**—अथैकदा कश्चिद्वायसः मांसखण्डमेकमलभत । सः तदैक-स्मिन्नाम्रवृक्ष उपाविशत् । भवत्वेवं करोम्यहमित्युक्तं शृगालेन । सपद्येव भूमावापतितं मांसखण्डमग्रसताखिलं शृगालः । भुजायुद्धरेत्याज्ञापयन्त्याचार्याः ।

**वाक्यपूरणम्**—

[ एवं फलके पेटिकाः आलिख्य वाक्यानि पूरयन्तु छात्राः । प्रथममेकः एव शब्दः कस्यामपि पेटिकायां लेखितव्यः । अनन्तरमखिलं वाक्यं कथयितव्यम् । ]

---

# षड्विंशः पाठः ।

## पितापुत्रयोः संवादः ।

**पिता**—अयि जात गोविन्द, अपि समाप्तं सन्ध्यावन्दनम् ?

**पुत्रः**—समाप्तं खलु । वस्त्राणि परिदधामि । सन्नद्धः अहं तातचरणानामाज्ञापालने ।

**पिता**—अद्य तावदनाध्यायः वर्तते । आगच्छ मया सहोद्यानम् । तत्र हि कंचित्कालं विहरावः ।

**पुत्रः**—यद्भवद्भ्यः रोचते तदेव मम प्रियम् । एतद्भवतां पादुकायुगलम् । एषा च वेत्रयष्टिः ।

**पिता**—अयि वत्स, ननु पश्यैतामुद्यानशोभाम् ।

पुत्रः—दृष्टा किलैषा। मनोहरं खल्वेतदुद्यानमद्य प्रभाते। पुष्पाणामतीव मधुरः गन्धः जनानां चित्तं तोषयति। शीतलः वायुः मन्दं मन्दं वहति नाशयति च तेषामालस्यम्। बालसूर्यस्य किरणाः प्रकाशन्ते नाशयन्ति च निशायाः अन्धकारम्।

पिता—साधूक्तं कुशलेन कुमारेण। प्रभातेऽभिनवं खलु दृश्यते सकलं विश्वम्।

पुत्रः—अयि तात, अस्मिन् वृक्षे एते वानराः विटपाद्विटपं प्लवन्ते। कुर्वन्ति च चीत्कारमुच्चैः। कुत्र नु वर्तते तेषां गृहम्।

पिता—न कुत्रापि तेषां गृहम्। ते गृहं न कदापि रचयन्ति। वृक्षस्य शाखास्वेव वसन्ति। रात्रावपि तत्रैव स्वपन्ति।

पुत्रः—किं नु खलु तस्माद्विटपादुद्गच्छति ?

पिता—भ्रमराः एव तत्रोड्डयन्ते। वानरैः चालितः सः विटपः। तस्मात्ते गृहेभ्यः उड्डयन्ते।

पुत्रः—यथार्थमगवतं तातेन। अत्रैव मधुकोषः एतेषां वर्तते। मालाकारेण अस्मान्मधुकोषान्मधु गृहीतम्। तद् बहु मधुरम्।

पिता—अयि जात, उपयुक्ताः खलु भ्रमराः जनानाम्। पुष्पात्पुष्पं ते भ्रमन्ति चिन्वन्ति च लवशः मधु।

पुत्रः—ननु कैः पदार्थैः निर्मितः अयं कोषः ?

पिता—सिक्थेन। एतद् सिक्थं बहूपयुक्तम्। सततमुद्यमशीलाः भ्रमराः। यथा ते मधुनः सञ्चयं लवशः कुर्वन्ति तथा छात्रैः ज्ञानस्य सञ्चयः कर्तव्यः। ऋषीणां छात्रैः एवमेव पुरा ज्ञानस्य सञ्चयः कृतः।

पुत्रः—अनुगृहीतः अस्म्येतेन तातवचनेन। भ्रमरवत् पिपीलिकाप्युद्यमशीलेत्यहं मन्ये।

पिता—बाढम् । एते क्षुद्राः प्राणिनः स्वकर्मभिः सम्यगुपदिशन्ति जनान् ।

पुत्रः—अतः एवास्माकं गुरवः कथयन्ति । ननु सृष्टेः निरीक्षणं कुरुत । पुस्तकेष्वेव मासक्ताः भवतेति ।

पिता—अहो पण्डिताः चतुराः च युष्माकमाचार्याः । सर्वथा पूज्याः भवन्ति ते । अस्तु । अधुना गृहं गच्छावः । भोजनस्य वेला संजाता ।

कश्चिद् बटुर्दर्भपवित्रपाणिर्वने सदा सिञ्चति बालचूतान् ।
आम्राश्च सिक्ताः पितरश्च तृप्ता एका क्रिया द्व्यर्थकरी प्रसिद्धा ॥ १ ॥

उद्योगिनं पुरुषसिंहमुपैति लक्ष्मी-
र्दैवेन देयमिति कापुरुषा वदन्ति ।
दैवं विहाय कुरु पौरुषमात्मशक्त्या
यत्ने कृते यदि न सिध्यति कोऽत्र दोषः ॥ २ ॥

क्षणशः कणशश्चैव विद्यामर्थं च साधयेत् ।
क्षणे नष्टे कुतो विद्या कणे नष्टे कुतो धनम् ॥ ३ ॥

---

अनाध्यायः । भ्रमरः । विटपः । मधुकोषः । सञ्चयः । सिध्यति । साधयति । उड्डयते । विहरति ।

**सन्धिः**—गोविन्दः अहम् = गोविन्दोऽहम् । रामः अत्र = रामोऽत्र । [ अ + विसर्गः + अ = ओऽ । ] अश्वः धावति = अश्वो धावति । बालः जल्पति = बालो जल्पति । [ अ + विसर्गः + मृदुव्यञ्जनम् = ओ । ] सूर्यः उदेति = सूर्य उदेति । वृद्धः ऋषिः = वृद्ध ऋषिः । छात्रः एषः = छात्र एषः । जनः इच्छति = जन इच्छति । नृपः ऐश्वरम् = नृप ऐश्वरम् । वैद्यः औषधम् = वैद्य औषधम् । [ अ + विसर्गः + इतरे स्वराः = ( लोपः ) । ] रामः पश्यति = रामः पश्यति । रामः करोति = रामः करोति । [ अ + विसर्गः + क्, ख्, प्, फ् = ( न कोऽपि विकारः ) । ] मृगः चरति =

मृगश्चरति । नरः तरति = नरस्तरति । पुरुषः छत्रम् = पुरुषश्छत्रम् । रामः टीकते = रामष्टीकते । [ अ + विसर्गः + च्, छ् = श् ] [ अ + विसर्गः + ट्, ठ् = ष् ] [ अ + विसर्गः + त्, थ् = स् ] कुमारः सरति = कुमारः सरति, कुमारस्सरति वा । बालः शालां = बालः शालां, बालश्शालां वा । छात्रः षट् पुष्पाणि = छात्रः षट्पुष्पाणि, छात्रष्षट्पुष्पाणि वा ।

[ अ + विसर्गः + स् = न कोऽपि विकारः, स् वा ।
अ + विसर्गः + श् = " , श् वा ।
अ + विसर्गः + ष् = " , ष् वा । ]

सः–एषः कुमारः = स–एष कुमारः ।
सः–एषः हस्तः = स–एष हस्तः ।
सः–एषः उष्ट्रः = स–एष उष्ट्रः ।
एषः + व्यंजनं 'अ' वर्ज्यस्वरः वा = } विसर्गस्य लोपः
सः + " " = }
सः–एषः अहम् = सोऽहम्–एषोऽहम् [ सः–एषः + अ = ओऽ । ]

# सप्तविंशः पाठः ।

## कुक्कुटः ।

एष कुक्कुटोऽस्ति । अस्य वर्णश्चित्रितः पिच्छानि वक्राणि शिखा च कङ्कतरूपा वर्तते । अस्य मस्तकं सदोन्नतम् । उरोभागश्चोत्सेधी । कुक्कुटस्य चञ्चुः ह्रस्वा पादावपि ह्रस्वौ । क्षेत्रपालाः कुक्कुटं पालयन्ति । कुक्कुटस्य भार्या कुक्कुटी । तस्याः बहवः शावकाः जायन्ते । कुक्कुट्याः वर्णो धूसरः । तस्याः आकृतिः अपि न कुक्कुटस्याकृतिवद् रुचिरा । कुक्कुटः प्रभाते सूर्योदयात्प्राग् रवं करोति । स एवोषःकालः । तस्य रवं श्रुत्वोद्यमशीलः कृषीवलः शयनादुत्तिष्ठति स्वकार्यं चारभते ।

अथ कदाचित् कोऽपि कृषीवलः स्वक्षेत्रेऽवसत् । लब्धासीत् तस्योटजम् । तत्र कुक्कुटकुलं सारमेयं धेनुं द्वौ बलीवर्दौ च स पालयति स्म । तत्र कस्मिंश्चिद् दिनेऽतीते मध्यरात्र उटजस्य समीपमागतः कश्चिद्व्याघ्रः । तस्य गन्धेन त्रस्ताः सा धेनुः तौ

बलीवर्दौ स सारमेयश्च। तेषां कोलाहलेन प्रबोधितः स कृषीवलो बहिरागच्छत् सर्वतोऽवालोकयच्च। अचिरेण तेन दृष्टः स व्याघ्रः। तदा धेनुं सारमेयं च स उटजस्यान्तर्भागमनयत्। बलीवर्दौ तत्र नेतुं नासीत् तस्यावसरः। समीपमागतं व्याघ्रं दृष्ट्वा कृषीवलो भीतिग्रस्त उच्चैः आक्रोशत्। प्राक्षिपच्च तं प्रत्युपलान्। तथापि व्याघ्रो दूरं नापासरत्। तत्रैव स्थित्वा बलीवर्दं हन्तुं कमप्युपायमचिन्तयत्। कृषीवलो न किमप्यन्यत्कर्तुं समर्थ इति मत्वा व्याघ्रो बलीवर्दं प्रत्यभ्यद्रवत्। तस्मिन्नेव क्षण उटजस्थः कुक्कुट उच्चैः रवमकरोत्। तेनापरिचितेन रवेण संत्रस्तः सत्वरं पलायितः स व्याघ्रः। एवं तेन कुक्कुटेन निवारितं कृषीवलस्य सङ्कटम्।

अरक्षितं तिष्ठति दैवरक्षितं सुरक्षितं दैवहतं विनश्यति।
जीवत्यनाथोऽपि वने विसर्जितः कृतप्रयत्नोऽपि गृहे विनश्यति ॥ १ ॥

---

कुक्कुटः। कृषीवलः। कङ्कतः। उरोभागः। उटजम्। आलोकयत्। आक्रोशत्। प्राक्षिपत्। अभ्यद्रवत्।

**प्रश्नाः**—कीदृशो वर्णः कुक्कुटस्य ? क उपयोगः कङ्कतस्य ? कः पालयति कुक्कुटम् ? का तस्य जाया ? कदा रवं करोति सः ? के प्राणिनः पालितास्तेन कृषीवलेन ? किं कृतं तैः व्याघ्रस्य गन्धं लब्ध्वा ?

**सन्धिः**—कुमाराः अत्र तिष्ठन्ति = कुमारा अत्र तिष्ठन्ति। मृगाः उपविशन्ति = मृगा उपविशन्ति। बालाः इच्छन्ति = बाला इच्छन्ति। नृपाः एवं प्रजाः रक्षन्ति = नृपा एवं प्रजा रक्षन्ति। जनाः गच्छन्ति = जना गच्छन्ति। [ आ + विसर्गः + स्वरः = विसर्गस्य लोपः ] [ आ + विसर्गः + मृदुव्यंजनम् = विसर्गस्य लोपः। ] अश्वाः कर्षन्ति = अश्वाः कर्षन्ति। नराः पालयन्ति = नराः पालयन्ति। [ आ + विसर्गः + क् ख् अथवा + प् फ् = ( न कोऽपि विकारः। ) ] मत्स्याः तरन्ति = मत्स्यास्तरन्ति। बलीवर्दाः चरन्ति = बलीवर्दाश्चरन्ति। लेखकाः टीकन्ते = लेखकाष्टीकन्ते। [ आ + विसर्गः + त् थ् = स्। आ + विसर्गः + च् छ् = श्। आ + विसर्गः + ट् ठ् = ष्। ]

# अष्टाविंशः पाठः ।

## आम्रफलम् ।

ज्यायान् भ्राता—वत्स, पश्यैतानि त्रीण्याम्रफलानि ।

कनीयान् भ्राता—महान् खलु मे प्रमोदः । आर्य, अपि यच्छसि एतेषामन्यतमं मह्यं भक्षणार्थम् ।

ज्या० भ्रा०—वत्स, नैतानि पक्वान्याम्राणि । कीदृशो वर्ण एतेषाम् ?

क० भ्रा०—हरितः खलु ।

ज्या० भ्रा०—कीदृशो नु वर्णः पक्वानामाम्राणाम् ?

क० भ्रा०—आरक्तः किल पीतो वा ।

ज्या० भ्रा०—अप्यस्ति कोऽप्यन्यो भेदः पक्वापक्वयोः आम्रयोः ? स्पृश तावदेतान्याम्राणि हस्तेन ।

क० भ्रा०—हा धिक्, कठिनं खल्वेतदाम्रम्। त्रीण्यप्याम्राणि कठिनानि सन्ति।

ज्या० भ्रा०—कीदृशो नु स्पर्शः पुनः पक्वस्याम्रस्य? अपि स्मरसि?

क० भ्रा०—स मृदुः इति मन्ये। पक्वमाम्रं मृदु वर्तते।

ज्या० भ्रा०—साधूक्तं वत्स त्वया। कीदृशः पुनर्गन्धः पक्वस्याम्रस्य?

क० भ्रा०—नूनं मधुरोऽत एव रम्यः। तस्य स्वादोऽपि मधुरः।

ज्या० भ्रा०—सत्यमेतद्। कीदृशः स्वादो गन्धश्चापक्वस्याम्रस्य?

क० भ्रा०—अम्लोऽपक्वस्याम्रस्य गन्धः स्वादश्च। न मे रोचतेऽपक्वमाम्रम्।

ज्या० भ्रा०—एतान्येवापक्वान्याम्राणि सप्तभिः दिनैः पक्वानि भविष्यन्ति।

क० भ्रा०—कथं, कथमिव?

ज्या० भ्रा०—शुष्कैः तृणैः अविरलैः वस्त्रैः चैतान्याम्राण्यहमाच्छादयामि। तेषामुष्मणैतानि पक्वानि भविष्यन्ति।

क० भ्रा०—भृशं प्रमुदितोऽहमार्यस्य वचनेन। झटित्येवाहं शुष्कं तृणमुटजादानयामि।

ज्या० भ्रा०—भवतु। सुशीलः खलु वत्सो मम साहाय्यं करिष्यति। सर्वेषु फलेष्वाम्रमतीव मधुरं रुचिरं सुलभं च वर्तते। दीना अपि जना आम्रं लभन्ते।

क० भ्रा०—किमर्थं नु ते द्राक्षाफलानि दाडिमानि नारङ्गानि न्यग्रोधानि च न लभन्ते?

ज्या० भ्रा०—यतस्तानि फलानि दुर्लभानि महार्घाणि च सन्ति।

क० भ्रा०—कादलानि खर्जूराणि जम्बूफलानि च दीना जना लभन्त एव ।

ज्या० भ्रा०—बाढम् । परं तान्याम्रवन्न मधुराणि ।

क० भ्रा०—नारिकेलमपि सुलभमिति मे तर्कः ।

ज्या० भ्रा०—एवमेतद् । परं तदाम्रवन्न मधुरम् ।

क० भ्रा०—अयि आर्य, मिष्टान्नं फलेभ्यः स्वादुतरं विद्यते । बहु रोचते मह्यं मिष्टान्नम् । न तथा फलानि ।

ज्या० भ्रा०—वत्स, सत्यमेतद् । परं मिष्टान्नं कृत्रिमं भवति । प्रभूतया शर्करया तन्मिश्रितम् । तन्न पथ्यकरं कुमारस्य । फलानि पुनः स्वभावत एव मधुराणि । हितावहं भवति तेषां माधुर्यम् । फलानामाहारः सात्विकः । अत एव मुनयो गृहस्थाश्चोपवासदिने फलानि भक्षयन्ति ।

क० भ्रा०—अपि नाम सन्ति केचिन्मुनयः सम्प्रति ?

ज्या० भ्रा०—अथ किम् । बहवो मुनयो निर्जनेषु पर्वतेषु वनेषु वा वसन्ति फलानि मूलानि च भक्षयन्ति । ईशस्वरूपं च ध्यायन्ति ।

आकर्ण्याम्रफलस्तुतिं जलमभूत्तन्नारिकेलान्तरं
प्रायः कण्टकितं तथैव पनसं जातं द्विधोर्वारुकम् ।
आस्तेऽधोमुखमेव कादलमलं द्राक्षाफलं क्षुद्रतां
श्यामत्वं बत जाम्बवं गतमहो मात्सर्यदोषादिह ॥ १ ॥
गर्वं मा कुरु शर्करे तव गुणाञ्जानन्ति राज्ञां गृहे
ये दीना धनवर्जिताश्च कृपणाः स्वप्नेऽपि पश्यन्ति नो ।
आम्रोऽहं मधुकूपकैर्मम फलैस्तृप्ता हि सर्वे जना
हे दुग्धे तव किं गुणैर्मम फलैस्तुल्यं न किंचित्फलम् ॥ २ ॥

---

आम्रः । आम्रम् । नारङ्गम् । न्यग्रोधम् । खर्जूरम् । कादलम् । जाम्बवम् । कदलीफलम् । जम्बूफलम् ।

**सन्धिः**—मुनिः भजति = मुनिर्भजति । धेनुः यच्छति = धेनुर्यच्छति । कवेः बुद्धिः = कवेर्बुद्धिः । गुरोः गृहम् = गुरोर्गृहम् । सप्तभिः अश्वैः = सप्तभिरश्वैः । वस्त्रैः आवृतम् = वस्त्रैरावृतम् । पितुः इच्छा = पितुरिच्छा । नृपतेः उद्यानम् = नृपतेरुद्यानम् । [ 'अ'–'आ' वर्ज्यः स्वरः + विसर्गः + मृदुव्यंजनं स्वरो वा = विसर्गस्थाने रेफो भवति ] धेनुः चरति = धेनुश्चरति । रविः तपति = रविस्तपति । कवेः टीका = कवेष्टीका । नृपतेः छत्रम् = नृपतेच्छत्रम् । [ कोऽपि स्वरः + विसर्गः + च्, छ् = श्, + त् – थ् = स्, + ट् – ठ् = ष् ] वायुः प्रीणाति = वायुः प्रीणाति । तरोः फलम् = तरोः फलम् । ऋषेः कार्यम् = ऋषेः कार्यम् । कपिः खनति = कपिः खनति । [ कोऽपि स्वरः + विसर्गः + क् – ख्, + प् – फ् = ( न कोऽपि विकारः ) ]

**प्रयोगाः**—( अधोगत-वाक्येषु युक्ताथ 'न'–'मा'–'इव'–'एव'–इति एकैकं पदं प्रयोजयत । )

( १ ) जाम्बवम् आम्रम् ______ न मधुरम् ।
( २ ) अपक्वानि फलानि जनेभ्यः ______ रोचन्ते ।
( ३ ) फलानि ______ हितावहानि न मिष्टान्नानि ।
( ४ ) अम्लानि फलानि ______ भक्षय ।

---

# नवविंशः पाठः ।

## हरिणः ।

एष हरिणः । अस्यैव मृग इति नामान्तरम् । अस्य वर्णश्चित्रितो विद्यते । केषांचिन्मृगाणां वर्णो धूसरः कृष्णः पिङ्गलश्च । प्रकृत्यायं वन्यः पशुः । परमतीव सौम्यो भीरुश्च न तु हिंस्रः । तृणानि पर्णानि च हरिणो भक्षयति । अस्य चत्वारः पादाः कृशाः । अत एवायं द्रुतं

धावति । अस्योत्प्लवनं जानानानन्दयति । यदायं महता वेगेनोत्प्लवते तदाकाश एव धावति न तु भूम्यामिति दृश्यते । हरिणस्य द्वे श्रृङ्गे स्तः । कठिने तीक्ष्णाग्रे चैते श्रृङ्गे । प्रतिश्रृङ्गं कतिपयाः लघवः शाखाः सन्ति । कोमलं खलु मृगस्य रूपं नयने निर्मले तरले च । नैतच्चित्रं यदेतादृशं मृगं दृष्ट्वा भगवती सीतादेव्यपि मोहिता ।

अथ कश्चिद्धरिणः कस्मिन्नप्यरण्येऽवसत् । कदाचित् स जलं पातुं तडागमगच्छत् । तत्र जले स्वशरीरस्य प्रतिबिम्बं दृष्ट्वा

सोऽचिन्तयत् । 'हन्त, कृशा मम पादाः । अहो शोभने मम शृङ्गे । धिग् एतान् पादान् । दिष्ट्या, एताभ्यां शृङ्गाभ्यामहमलङ्कृतोऽस्मि' इति । अनन्तरं यावदितस्ततोऽचरत् स तस्य तडागस्य तीरे तावत् तत्र प्राप्तः कोऽपि व्याधो बहवः कुक्कुराश्च । तान् दृष्ट्वा महता वेगेनोत्प्लुत्योत्प्लुत्याधावत् स मृगः । ते कुक्कुरास्तमन्वधावन् । तं मृगं ग्रहीतुं तेऽक्षमाः । परमकस्मात् संलग्ने तस्य शृङ्गे केनापि गुल्मेन । तेन स तत्र निरुद्धोऽभवत् । तस्माद् गुल्मादात्मानं मोचयितुं सोऽक्षमः । महतावेगेनात्मानं मोचयितुं सोऽयतत । किन्तु विफला जातास्तस्य प्रयत्नाः । अत्रान्तरे तत्र प्राप्तास्ते कुक्कुरास्तं व्यापदयन् । मरणकाले स मृगोऽचिन्तयत् । 'हा कष्टम् । पादै रक्षितोऽहम् । परं शृङ्गाभ्यां हतोऽस्मि' इति ।

सर्पाः पिबन्ति पवनं न च दुर्बलास्ते
शुष्कैस्तृणैर्वनगजा बलिनो भवन्ति ।
कन्दैः फलैर्मुनिवराः क्षपयन्ति कालं
सन्तोष एव पुरुषस्य परं निधानम् ॥ १ ॥

मृगा मृगैः सङ्गमनुव्रजन्ति गावश्च गोभिस्तुरगास्तुरङ्गैः ॥
मूर्खाश्च मूर्खैः सुधियः सुधीभिः समानशीलव्यसनेषु सख्यम् ॥ २ ॥

---

हरिणः । प्रतिबिम्बम् । व्याधः । गुल्मः । सन्तोषः । दिष्ट्या । धिक् । हन्त । कष्टम् । खलु । चित्रम् ।

**प्रश्नाः**—कीदृशः पशुर्मृगः ? कति जातयो मृगाणाम् ? किमपश्यत् स मृगो जले ? किमचिन्तयत् तदा ? केन रक्षितो मृगः ? केन मारितः सः ? को दोषो मृगस्य ?

**विरुद्धाः शब्दाः**—[ यथा श्वेतम् × कृष्णम् ,

तथा

| | | | |
|---|---|---|---|
| निर्मलम् × ________ | | दीर्घम् × ________ | |
| निश्चलः × ________ | | सुलभम् × ________ | |
| सुरूपा × ________ | | मधुरम् × ________ | |
| हन्त × ________ | | अन्धकारः × ________ | |
| क्षमः × ________ | | अपक्वम् × ________ | |
| मारितः × ________ | | कठिनम् × ________ | |
| मुक्तः × ________ | | कृशः × ________ | |
| सफलः × ________ | | दक्षिणौ × ________ | |
| | | तुङ्गः × ________ | |

**नामावलिः**—( १ ) सर्वेषां ग्राम्य–पशूनां नामानि कथयत ।
सर्वेषां वन्य–पशूनां नामानि ,,
( २ ) सर्वेषां खाद्यानां नामानि ,,
सर्वेषां पेयानां नामानि ,,

---

# त्रिंशः पाठः ।

## व्याघ्रबकयोः ।

एष व्याघ्रः । प्रकृत्यायमतीव क्रूरः सर्वेषु वन्यपशुषु द्रुतगतिश्च । व्याघ्रस्य वर्णः पीतः किं च शरीरे कृष्णरेखा अङ्का वा सन्ति । चत्वारोऽस्य पादा दीर्घं च लाङ्गूलम् । एकैकस्य करस्य चत्वारो निशिता नखराः सन्ति । अस्य दंष्ट्रा अपि तीक्ष्णाः । व्याघ्रो दिवा गुहायां स्वपिति न च सहते सूर्यस्यातपम् । रात्रौ स वने चरति भक्षयति च पशून् । सर्वेषां व्याघ्राणामेतादृश्येव दिनचर्या वर्तते ।

अथ कदाचिद् घातशीलो नाम कश्चिद्व्याघ्रोऽवसदेकस्मिन् वने । प्रतिदिनं स पशून् व्यापाद्य भक्षयति स्म । कस्मिंश्चिद् दिने

तस्य गले संलग्नं किमप्यस्थि। तेन दुःखितः स किमपि भक्षयितु-

मसमर्थोऽभवत् । ततः स व्याघ्रो नद्यास्तीरमगच्छत् । अपश्यच्च तत्र निर्बुद्धिं नाम बकम् । तस्य दीर्घां ग्रीवां चञ्चुं च

दृष्ट्वा घातशीलस्तमवदत् । 'भो मित्र श्वेतदेह, मम गले किमपि लग्नमस्ति । तत्त्वं कृपयोद्धर । पश्चाद् बहुमूल्यं पारितोषिकं दास्यामि तुभ्यम्' इति । एतन्मधुरं वचनं श्रुत्वा स श्वेतदेहो व्याघ्रस्य मुखात्तदस्थि चञ्च्वोदहरदवदच्च । 'भो घातशील, प्रयच्छ तत्पारितोषिकमधुना' इति । ततः स घातशीलोऽभाषत । 'यदा तव मस्तकं मम मुखेऽभवत्तदाहं तन्न व्यदारयम् । तदेव बहुमूल्यं पारितोषिकं दत्तं मया तुभ्यम्' इति ।

उभौ शुक्लौ पक्षौ भुवि वियति चावारितगतिः
सदा मीनं भुङ्क्ते वसति सकलस्थाणुशिरसि ।

बके सर्वश्चान्द्रो विलसति गुणः किंचिदधिको
गुणाः स्थाने पूज्या नरवर न तु स्थानविकलाः ॥ १ ॥

---

व्याघ्रः । शार्दूलः । दिनचर्या । श्वेतदेहः । पारितोषिकम् । सहते । असहत । भाषते । अभाषत । व्यदारयत् ।

**प्रश्नाः**—कीदृशः स्वभावो व्याघ्रस्य ? कुत्रावसत्स व्याघ्रः । किमभक्षयत् स प्रतिदिनम् ? किं संलग्नं तस्य गले ? तदा कस्य समीपमगच्छत्सः ? कुत्रावसत्स बकः ? किमवदत्स व्याघ्रस्तम् ? स श्वेतदेहः किमकरोत् ?

| **वाक्यपूरणम्**—वर्तमानकालः | भूतकालः | भविष्यत्कालः |
| --- | --- | --- |
| १. व्याघ्रो वने ______ | ______ | ______ |
| २. व्याघ्रः पशून् ______ | ______ | ______ |
| ३. व्याघ्रः ______ तीरं | ______ | ______ |
| ४. व्याघ्रस्य गले ______ | ______ | ______ |
| ५. व्याघ्रो बकं ______ | ______ | ______ |

**विरुद्धाः शब्दाः**—

| | |
| --- | --- |
| नयति × ______ | मारयति × ______ |
| दयाशीलः × ______ | शीतलम् × ______ |
| सुबुद्धिः × ______ | शनैः × ______ |

---

# एकत्रिंशः पाठः ।

## भल्लूकः ।

एष भल्लूको वन्यः पशुः । भल्लूकस्य कृष्णो वर्णः स्थूलं च शरीरं विद्यते । दीर्घाः कठिनाश्च केशा अस्य शरीरमाच्छादयन्ति । अस्य नखरा अपि दीर्घास्तीक्ष्णाश्च सन्ति । अयं तैः शरीरं कण्डूयति शत्रुं च कुतकूतयति । भल्लूकोऽरण्ये वसति शीतलायां छायायां विचरति च भक्षणार्थम् ।

अथैकस्मिन् दिने बहवो बालचरा वनं विहर्तुमगच्छन्। कस्यचिद् वृक्षस्य शीतलायां छायायामुपविश्य ते क्रीडा आरभन्त। कश्चन बालचरो वृक्षमारोहद्वानरवदकरोच्च चीत्कारम्। अन्यः सुदूरमधावत् कस्यचिद् गुल्मस्य पृष्ठत आत्मानमगोपयत् सिंहवदगर्जच्च। तृतीयः कोऽपि बालचरस्तत्रैव प्लवने नर्तने गायने च चातुर्यं प्रादर्शयत्। अपरोऽग्निशलाकाः सत्वरं सन्दीप्याक्षिपदितस्ततः। ता अग्निशलाकास्तारकावदाकाशेऽस्फुरन्।

अत्रान्तरे पुत्रानुगता काचिन्नारी मार्गेण गच्छन्ती तद्वनं प्राप्ता। किंचिद् दूरं सागच्छत्। अकस्मात् कोऽपि भल्लूकोऽभ्यपतत् तस्याः समीपम्। तं दृष्ट्वा सा नारी तस्याः कुमारश्च महता भयेनाक्रोशतामितस्ततश्चाधावताम्। एतत्तयोः सङ्कटं ज्ञात्वा कश्चन बालचरो भल्लूकवदनदत्। तं परिचितं शब्दं श्रुत्वा स भल्लूकस्तौ पथिकौ परित्यज्य तं बालचरमभ्यद्रवत्। यदा स समीपमागच्छत्तदापरो बालचरस्तस्य शरीरे सन्दीप्तानामग्निशलाकानां वृष्टिमकरोत्। ताभिः शलाकाभिः शीघ्रमेवाभवन् प्रज्वलिता भल्लूकस्य दीर्घाः

केशाः। तेन संत्रस्तः स पशुर्गुल्मं पलायत। तदा ते बालचराः सहसैवोच्चैरघोषयन्।

इत्थं तयोः पथिकयोः सङ्कटं निराकृतं तैर्बालचरैः। अहो प्रत्युत्पन्ना मतिर्बालचराणाम्।

अयं निजः परो वेति गणना लघुचेतसाम्।
उदारचरितानां तु वसुधैव कुटुम्बकम्॥ १॥

---

भल्लूकः। बालचराः। अग्निशलाका। सन्दीप्ता। कण्डूयति। कुतकूतयति। नदति। घोषयति।

**प्रश्नाः**—कीदृशो वर्णो भल्लूकस्य? कुत्र वसति सः? किं करोति स नखैः? कुत्रागच्छंस्ते बालचराः? तेषां चेष्टा वर्णयत। अत्रान्तरे कागच्छत्तेनैव मार्गेण? क आसीत्तया सह? भल्लूकं दृष्ट्वा किमकुरुताम् तौ? तदा किमकरोदेको बालचरः? तं श्रुत्वा क्वागच्छत्स भल्लूकः? अनन्तरं किमकरोदन्यो बालचरः?

**सन्धिः**—अस्फुरन् + तारकाः = अस्फुरंस्तारकाः। वयस्यान् + च = वयस्यांश्च। कपिः रवं करोति = कपी रवं करोति।

[ ऋ–र्–ष् + न् = ण् ] + उ० नर + इन = नरेण [ ऋ–र्–ष् + (स्वरः+य–व–'क'–वर्ग–'प' वर्ग–ह् ) + न = ण। उ० – वृक + इन = वृकेण। राम + इन = रामेण ] अन्त्यस्य 'न्' स्य एष विकारो न भवति–यथा नरान्।

**वाक्यपूरणम्**—

( १ ) प्राचीनकाले ——— भरतवर्षे राज्यं ———। सम्प्रति ——— अत्र ———। न ज्ञातं ——— शतवर्षान्तरे ———।

( २ ) पुरा भारतीयानां ——— इत्यभिधानं ———। अधुना हिन्दव इति ——— तेषां भवति। न ज्ञातं ——— तेषां भविष्यत्काले ———।

**कथान्तरम्**—बालचराणां कामपि अन्यां कथां कथयत।

---

# द्वात्रिंशः पाठः ।

## सुशीलौ पुरुषौ ।

पुरा किल हस्तिनापुरे धर्मराजो नाम महात्मा नृपतिरासीत् । नयेन स राज्यमकरोत् । भगवतः श्रीकृष्णस्य प्रियभक्तः स पालयति स्म मूर्तिमान् धर्म इव प्रजाः । भीमार्जुनौ नकुलसहदेवौ च तस्य चत्वारो भ्रातर आसन् । तेऽपि धर्मनिष्ठा हरिभक्ता रणधीराश्च ज्येष्ठभ्रातुराज्ञापालनपरा विष्णोश्चत्वारो भुजा इवाभवन् । धर्मराजस्य सर्वाः प्रजाः सुशीलाः सन्तुष्टाश्च स्वधर्ममसेवन्त । तस्मिन् राज्ये कश्चन पुरुषः कदाचिदन्यस्य क्षेत्रमक्रीणात् । समुचितं मूल्यं तेन तदर्थं दत्तम् । तत्र व्यवसायमकरोत् स प्रतिदिनमनलसः । बलीवर्दानां साहाय्येन भूमिमकृषत् खनित्रेण चाखनत् । गच्छता कालेन स एकस्मिन् स्थले खातायां गर्तायामपश्यत् ताम्रकुम्भम् । तेन किंचिद्विस्मितो भूत्वा तं कुम्भमुदहरत् । तस्मिन् महार्घाणि रत्नानि सुवर्णस्य बहूनि नाणकानि च दृष्ट्वा सोऽचिन्तयत् । 'अहो विपुलमेतद् द्रव्यम् । परं नैतन्मदीयम्' इति । ततस्तं कुम्भं गृहीत्वा स क्षेत्रस्य मूलस्वामिनो गृहमगच्छत् प्रत्यवदच्च तम् । 'भो आर्य, मया क्रीतं भवतः क्षेत्रम् । तत्रैष कुम्भो लब्धः । भवत एवायं न तु मम । एनं गृह्णातु भवान्' ।

ततोऽपरः पुरुषोऽभाषत । 'नैतद्युक्तं वयस्य । मया विक्रीतं तत्क्षेत्रम् । न किमपि तत्रस्थमधुना मदीयं भवति । अयं कुम्भो भवत एव भाग्यवतः' ।

प्रथमः पुरुषः पुनरवदत् । क्रीतं मया क्षेत्रं न पुनरन्तस्थं द्रव्यम् । तस्माद् भवान् गृह्णात्वेनं कुम्भम् ।

द्वितीयः पुरुष आह । मा मैवम् । सन्देह एवात्र वर्तते । तस्मादावां नृपतिं प्रति गच्छावः । अस्मिन् सन्देहे नृपस्य वचनं प्रमाणम् ।

ततस्तौ धर्मराजं प्रत्यगच्छताम् । तयोर्वृत्तान्तं श्रुत्वा स नृपोऽवदत् । 'अहो सुशीलौ खल्वेतौ पुरुषौ । द्रव्यलोभेनैतौ न मोहितौ । भाग्यवान् खल्वहं यस्य प्रजा एतादृश्यो धर्मनिष्ठा वर्तन्ते ।

भो आर्यौ, प्रीतोऽस्मि भवतोः सदाचारेण । भवतोर्न कोऽप्येतद् द्रव्यं ग्रहीतुमिच्छति । नाहमपि तद् ग्रहीतुमिच्छामि । अप्यस्ति किंचिदपत्यं भवतोः इति ।

प्रथमः पुरुषः–अस्ति ममैकः पुत्रोऽत्रभवतां कृपया ।

द्वितीयः पुरुषः–अस्ति च ममैका कन्या देवपादानां कृपया ।

धर्मराज—दिष्ट्या परमं भाग्यमेतयोरपत्ययोः । सुलभ एव निर्णयोऽधुना । भवतोः कन्यापुत्रयोर्विवाहो भवतु । गृह्णीतां च तौ दम्पती एवेदं द्रव्यम् ।

पुरुषौ—अहो कौशलं महाराजानां निर्णयस्य । अनुगृहीतौ स्वः । सर्वथा प्रमाणं देववचनम् ।

आचारः परमो धर्म आचारः परमं तपः ।
आचारः परमं ज्ञानमाचारात् किं न साध्यते ॥ १ ॥

उदारस्य तृणं वित्तं शूरस्य मरणं तृणम् ।
जिताक्षस्य तृणं भोगो निःस्पृहस्य तृणं जगत् ॥ २ ॥

यथा देशस्तथा भाषा यथा राजा तथा प्रजाः ।
यथा भूमिस्तथा तोयं यथा बीजं तथाङ्कुरः ॥ ३ ॥

---

धर्मराजः । प्रजाः । खनित्रम् । स्वामी । सन्देहः । दम्पती । अखनत् । असेवत क्रीतम् । विक्रीतम् । प्रीतः । मोहितः ।

**नाट्यम्**—एषा कथा कुमारैर्नाटयितव्या ।

**वाक्यपूरणम्** —

| | वर्तमानकालः | भूतकालः | भविष्यत्कालः |
|---|---|---|---|
| ( १ ) कश्चित् नृपः धर्मनिष्ठः ______ | | | |
| ( २ ) कतिपये नृपाः स्वधर्मं ______ | | | |
| ( ३ ) धर्मनिष्ठः जनः ______ कीर्तिं च लभते | | | |
| ( ४ ) सुशीलाः ______ सुखमनुभवन्ति | | | |
| ( ५ ) परद्रव्येण नरः भाग्यवान् ______ | | | |

**समानार्थाः शब्दाः**—(१) नृपः । ______ ______ ______

(२) ईश्वरः । ______ ______ ______

(२) सम्पत्तिः । ______ ______ ______

# त्रयस्त्रिंशः पाठः ।

## द्वयोः पथिकयोः ।

अथैकदा कौचित् पुरुषौ किमपि नगरं प्रस्थितौ । तयोरेकतरः स्थूलोऽन्यश्च कृश आसीत् । कियतापि कालेन तौ मार्गे निबिडं वनं प्राप्तौ । तच्छीतलं स्थलं दृष्ट्वा भृशं सन्तुष्टौ तौ पथिकौ कस्यापि वृक्षस्य च्छायायामुपाविशताम् । समीपमेवासीत् स्वच्छजलेन पूर्णो निर्झरः । तं दृष्ट्वा कृशोऽवदत् । 'अहो निर्मलमेतज्जलम् । अस्य स्वादोऽपि बहु मधुरः । प्रशान्तमेतत् स्थलं सुखकरं भवति' इति । तं स्थूलः प्रत्यभाषत । 'एवमेतद् । आवां प्रवासेन श्रान्तौ । अत्र कंचित् कालं विश्रान्तिसुखमनुभवावः । उपाहारं च कुर्वः' इति । ततस्तौ पथिकौ खाद्यानि गृहीत्वा तस्य निर्झरस्य समीपमाहारार्थमुपविष्टौ ।

अनन्तरं स्थूलो वदति । 'अतिसुखदमेतत्स्थलम् । अत्रैव वस्तुमहमिच्छामि । न पुनः कोलाहलेनाकुलिते ग्रामे' । तं कृशः प्रतिभाषते । 'एतत्सृष्टेराह्लादकं रूपम् । अपरं तु भीषणं भवति । तत्त्वया नालोचितम् । तेनेत्थं वदसि' । स्थूलः पृच्छति । किं तद् भीषणं रूपम् ?

कृशः—भद्र, एतत्स्थानं वन्यपशूनां गृहम् । अत्र जलं पातुं वन्याः पशव आगच्छन्तीति मन्ये ।

स्थूलः—हन्त भीषणा खलु कल्पनेयम् । यदि किंचित्सङ्कटमत्रापतेत् तर्हि त्वं मां त्यक्ष्यसि किम् ?

कृशः—नहि नहि । वयस्य न कदाप्येतद्भविष्यति । तव समीपमेवाहं सदा स्थास्यामि ।

तस्मिन्नेव क्षणे कश्चिद् भल्लूकस्तत्रागच्छत् । तं दृष्ट्वा शीघ्रं वृक्षमारोहत् स कृशः । स्थूलस्तु पलायितुं वा वृक्षमारोढुं वासमर्थस्तत्रैव भूमौ मृतवदपतत् । स भल्लूकस्तं स्थूलं पुरुषं

नासिकयाजिघ्रत् । मृतं च मत्वा सुदूरमगच्छत् ।

अहो कापट्यं कृशस्य । अहो चातुर्यं स्थूलस्य । अहो मौर्ख्यं भल्लूकस्य ।

---

निर्झरः । उपाहारः । स्पृष्टिः । कापथ्यम् । मौर्ख्यम् । प्राप्तः । सन्तुष्टः । श्रान्तः । उपविष्टः । उपस्थितः ।

**वाक्यप्रयोगाः—**

१. अकर्मकाणि क्रियापदानि ।

स्थूलो भूम्यामुपाविशत् ।
स्थूलो भूम्यामुपविष्टः ।

पशुर्जाले ———— ।
पशुर्जाले पतितः ।

कृशो निर्झरं ———— ।
कृशो निर्झरं गतः ।

जना गृहेषु ———— ।
जना गृहेषु सुप्ताः ।

मृगः वने धावति ।
मृगः ———— धावितः ।

२. सकर्मकाणि क्रियापदानि ।

पुरुषौ जलमपिबताम् ।
पुरुषाभ्यां जलं पीतम् ।

कृशो भल्लूकं ———— ।
कृशेन ———— दृष्टः ।

भल्लूकः स्थूलं ———— ।
———— स्थूलः स्पृष्टः ।

स्थूल इदमवदत् ।
———— इदमुदितम् ।

जना आहारमकुर्वन् ।
जनैराहारः ———— ।

**नाट्यम्**—उपरि निर्दिष्टा कथा कुमाराभ्यां नाटयितव्या ।

| **उपसर्गाः**— | वर्तमानकालः | भूतकालः | भविष्यत्कालः |
|---|---|---|---|
| उप + विश् | = उपविशति | उपाविशत् | उपवेक्ष्यति । |
| अनु + भू | = अनुभवति | अन्वभवत् | अनुभविष्यति । |
| प्रति + भाष् | = प्रतिभाषते | प्रत्यभाषत | प्रतिभाषिष्यते । |
| आ + गम् | = आगच्छति | आगच्छत् | आगमिष्यति । |
| सम् + गम् | = सङ्गच्छते | समगच्छत | सङ्गंस्यते । |

( पुरा–अद्य–अनन्तरम्–ह्यः–अधुना–श्वः–इति ऐकैकं पदं क्रियापदैः सह वाक्येषु प्रयोजयत )

# चतुस्त्रिंशः पाठः ।

## सत्यवादी बन्दी ।

आसीत् खलु सिंहवर्मा नाम कस्यचिन्नगरस्याधिपतिः । वृद्धत्व-मापन्नः स सकलं राज्यभारं सुशीले गुणवति तनये स्थापितवान् । स च युवराजोऽखिलं राज्यतन्त्रमवालोकयत् । सुविनीतः स प्रिय आसीज्जनकस्य । धनुर्विद्यायां निपुणो भूत्वाजयत् सकलान् शत्रून् ।

राजनीत्यां कुशलः सन् रक्षितवान् प्रजा नयेन । क्रीडासु चतुरो जनानां स्तुतिपात्रमभवत् । स्वधर्मे निरतश्च सदा सन्मार्गेणावर्तत । तदानीं सन्तुष्टाः सुशीलाश्चावसन् सर्वाः प्रजाः । समृद्धः स देशः । कालेऽवर्षत् पर्जन्यः । न कश्चित् रोगो जनानपीडयत् । विरल

एवापमृत्युस्तत्र । स्तोकान्येव पातकानि । अपरो रामचन्द्र इव स युवराजोऽभवत् ।

अथ कदाचित् स नगरस्थं कारागृहं परीक्षितुमगच्छत् । तत्रासन् पञ्च बन्दिनः । तान् बन्दिनः प्रति स राजपुत्रो गत्वापृच्छत् । 'किमर्थं भोः, अत्र स्थापिता यूयम् । कोऽपराधः कृतो युष्माभिः' इति । ततः प्रथमो बन्दी प्रत्यभाषत । 'भो महाराज, न कोऽप्यपराधः कृतो मया । अकारणमेवाहमस्मिन् कारागृहे स्थापितोऽस्मि' इति । द्वितीयोऽवदत् । 'देव, अहमपि न किंचित्पातकमकरवम्' इति । तृतीयोऽभणत् । 'ममापि न कश्चिद्दोषः' इति । चतुर्थो न्यवेदयत् । 'मम दायादवचनेनैवाहं बद्धः । न किमपि मे दुश्चरितम्' इति । पञ्चमस्तु युवराजं साष्टाङ्गपातं प्रणम्य सविनयं कथितवान् । 'क्षमस्व भो महाराज । अहमपाहरं कस्यापि पान्थस्य द्रव्यम् । एतत्पापमाचरितं मया । तदर्थमुचित एवायं मे दण्डः प्राप्तः' इति । ततः स राजपुत्रोऽभाषत । 'ननु सत्यं तव वचनम् । त्वमेव खल्वपराधी । परमेते चत्वारो बन्दिनो नापराधिनः । एतेषां सज्जनानां सन्निधौ त्वया वासो न कर्तव्यः' । इत्युक्त्वा स तं पञ्चमं बन्दिनममोचयत् ।

लोभमूलानि पापानि व्याधयो रसमूलकाः ।
स्नेहमूलानि दुःखानि त्रीणि त्यक्त्वा सुखी भवेत् ॥ १ ॥
वदेत्सत्यं वदेत्सत्यं न वदेच्चानृतं कदा ।
पश्चात्तापाद् वदन् सत्यं बन्दी मुक्तश्च बन्धनात् ॥ २ ॥

---

युवराजः । राज्यतन्त्रम् । कारागृहम् । बन्दी । दायादाः ।

| उपसर्गाः— | वर्तमानकालः | भूतकालः | भविष्यत्कालः |
|---|---|---|---|
| सम् + रक्ष् = | ________ | समरक्षत | ________ |
| परि + ईक्ष् = | परीक्षते | ________ | ________ |
| नि + विद् = | ________ | न्यवेदयत | ________ |
| प्र + नम् = | ________ | ________ | प्रणंस्यति |
| उप + लभ् = | उपलभते | ________ | ________ |

एतेषां धातूनां सर्वाणि रूपाणि कथयत।

**पठनम्**—राजा राष्ट्रकृतं पापं राज्ञः पापं पुरोहितः।
भर्ता च स्त्रीकृतं पापं शिष्यपापं गुरुर्वहेत् ॥ १ ॥

परं विनीतत्वमुपैति सेवया महीपतीनां विनयो हि भूषणम्।
प्रवृत्तदानो मृदुसञ्चरत्करः करीव भद्रो विनयेन शोभते ॥ २ ॥

**वाक्यप्रयोगाः**—

| १. कर्तरि | २. कर्मणि |
|---|---|
| नृपो राज्यभारं वहति | नृपेण राज्यभारः उह्यते। |
| नृपो राज्यभारम् अवहत् | नृपेण राज्यभारः औह्यत। |
| युवराजः शत्रून् जयति | युवराजेन शत्रवः जीयन्ते। |
| युवराजः शत्रून् अजयत् | युवराजेन शत्रवः अजीयन्त। |
| भूपतिः प्रजाः रक्षति | भूपतिना प्रजाः रक्ष्यन्ते। |
| भूपतिः प्रजाः अरक्षत् | भूपतिना प्रजाः अरक्ष्यन्त। |
| राज्ञी कारागृहं परीक्षते | राज्ञ्या कारागृहं परीक्ष्यते। |
| राज्ञी कारागृहं पर्यैक्षत | राज्ञ्या कारागृहं पर्यैक्ष्यत। |
| बालको देवतां वन्दते | बालकेन देवता वन्द्यते। |
| बालको देवताम् अवन्दत | बालकेन देवता अवन्द्यत। |

| १. कर्तरि | २. भावे |
|---|---|
| पुरुषः जीवति | पुरुषेण जीव्यते। |
| पुरुषः अजीवत् | पुरुषेण अजीव्यत। |
| जनाः वसन्ति | जनैः उष्यते। |
| जनाः अवसन् | जनैः औष्यत। |
| मयूरः नृत्यति | मयूरेण नृत्यते। |
| मयूरः अनृत्यत् | मयूरेण अनृत्यत। |
| कन्याः रमन्ते | कन्याभिः रम्यते। |
| कन्याः अरमन्त | कन्याभिः अरम्यत। |

# पञ्चत्रिंशः पाठः ।

## वानरयूथम् ।

वानरो वृक्षे वसति । बहूनां वानराणां समूहः प्राय इतस्तत-श्चरन् दृश्यते । स वानरयूथमिति कथ्यते । वानरा वृक्षाद् वृक्षं प्लवन्ते । अतिचपलास्ते स्वभावतो वर्तन्ते । फलैः कन्दैश्च उदरभरणं

कुर्वन्ति । वानरानागतान् दृष्ट्वा बालकाः सानन्दं क्षिपन्ति तेषूपलान् । प्लवनैश्चीत्कारैश्च विडम्बयन्ति तान् । तेभ्यः खाद्यमपि प्रयच्छन्ति ।

प्रकृत्या वानरा अनुकरणशीलाः। यद्यदन्यैः क्रियते तत्तदेवानुकर्तुं ते बहुशः प्रयतन्ते।

अथैकदा कश्चित्पथिकः किमपि नगरं प्रस्थितः। तस्य मस्तके शिरस्कानां महान्भार आसीत्। मार्गेण गच्छता तेन प्राप्ता कापि वृक्षवाटिका। तच्छीतलं स्थलं दृष्ट्वा प्रवासेन श्रान्तः स पान्थोऽचिन्तयत्। 'अहो सुखकरं रमणीयं चैतदुपवनम्। अत्रैव वृक्षतले कंचित्कालं विश्रम्यानन्तरमपराह्णे गमिष्यामि समीपस्थां पुरीम्' इति। ततः कस्यापि तरोर्मूले शिरोभारमवस्थाप्य स सुखं संविष्टः। तत्र विहरदासीत् किमपि कपियूथम्। वृक्षाद् वृक्षं प्लवमानाः कपयस्तमेव द्रुममागता यत्र प्रसुप्तः स प्रवासी। तं भूमौ शयानं निश्चलं च वीक्ष्य केचिदुद्धता वानरास्तस्य समीपं वृक्षाद-वातरन्। शनैः शनैरुपसृत्य तैराक्रान्तः स भारः। तदा यूथपतिरेकं शिरस्कं तस्मादाहरत् स्वमस्तके चाधारयत्। ततस्तदेवानुकृतं सत्वरमन्यैः कपिभिः। सोल्लासं चीत्कारं कुर्वन्तस्ते कपयस्तस्मिन् वृक्षे शाखायाः शाखामुदप्लवन्त। तेन कोलाहलेन प्रबोधितः स पान्थो यावदुपरि वीक्षते तावत्कपीनां मस्तकेषु शिरोवेष्टनान्यपश्यत्। रक्तवर्णानि तानि शिरोवेष्टनान्यासन्। तैश्चित्रितोऽभवत्स तरुः। तेन रमणीयेन तरोः स्वरूपेण भृशं हर्षितः स पथिको यावत्स्वभारमव-लोकयति तावद्विषादं प्राप्तः। 'महती द्रव्यहानिर्मे जाता। अधुना किं करोमि। क्व गच्छामि। कथं दण्डयाम्येतान् नृशंसान् मर्कटान्'। इत्याक्रोशन् स्वशिरस्कं हस्तेनोद्धृत्य प्राक्षिपत् स भूमौ। तत्तस्य चेष्टितं दृष्ट्वा वृक्षस्थाः कपयोऽपि तमन्वकुर्वन्। ततः सहसा तरोः पतितानि तानि शिरोवेष्टनान्यालोक्य पुनरपि हर्षितः स पथिको व्यचिनोत्। सत्वरं च तं भारं शिरसा वहन् प्रस्थितः स्वमार्गेण। उक्तं हि—

> अचिन्तितानि दुःखानि यथैवायान्ति देहिनाम्।
> सुखान्यपि तथा मन्ये दैवमत्रातिरिच्यते ॥ १ ॥

प्राप्तव्यमर्थं लभते मनुष्यो देवोऽपि तं लङ्घयितुं न शक्तः।
तस्मान्न शोचामि न विस्मयो मे यदस्मदीयं न हि तत्परेषाम् ॥ २॥

---

कपिः। प्लवङ्गमः। शिरस्कम्। चीत्कारः। विषादः।

**प्रश्नाः**—कस्मात्कारणात् 'वानर' इति कपेः संज्ञा प्रसिद्धा? कीदृशः स्वभावः कपीनाम्? किमासीत् पथिकस्य भारे? तं सुप्तं दृष्ट्वा किं कृतं वानरैः? केन प्रबोधितः स पान्थः? तदा किमकरोत् सः? तद्वीक्ष्य कपिभिः किं कृतम्?

**शब्दप्रयोगाः**—

| | |
|---|---|
| नायकेन सह वानरा धावन्ति।<br>सैन्येन सह नृपतिश्चलति।<br>रामेण सार्धं रावणोऽयुध्यत।<br>रामेण समो न कोऽपि वीरः। | सह–सार्धं–सम<br>( तृतीया ) |
| गुरुभ्यो नमः। देव्यै नमः। श्रीपतये नमः।<br>कुमाराय स्वस्ति। प्रजाभ्यः स्वस्ति। | नमः–स्वस्ति<br>( चतुर्थी ) |
| स्वागतं विप्रेभ्यः। कुशलं पथिकाय।<br>स्वागतं विप्राणाम्। कुशलं पथिकस्य। | स्वागतं–कुशलं<br>( चतुर्थी षष्ठी वा ) |

**वाक्यप्रयोगाः**—

| १. कर्तरि | २. कर्मणि |
|---|---|
| पान्थो भारं नयति | पान्थेन भारः नीयते। |
| पान्थो भारम् अनयत् | पान्थेन भारः अनीयत। |
| कपयः शिरोवेष्टनानि यच्छन्ति | कपिभिः शिरोवेष्टनानि दीयन्ते। |
| कपयः शिरोवेष्टनानि अयच्छन् | कपिभिः शिरोवेष्टनानि अदीयन्त। |
| पथिकः प्रवासं करोति | पथिकेन प्रवासः क्रियते। |
| पथिकः प्रवासम् अकरोत् | पथिकेन प्रवासः अक्रियत। |
| बालाः चीत्कारं शृण्वन्ति | बालैः चीत्कारः श्रूयते। |
| बालाः चीत्कारम् अशृण्वन् | बालैः चीत्कारः अश्रूयत। |

| १. कर्तरि | २. भावे |
|---|---|
| ईश्वरः भवति–ईश्वरः अभवत् | ईश्वरेण भूयते–ईश्वरेण अभूयत। |
| रथः सरति–रथः असरत् | रथेन स्रियते–रथेन अस्रियत। |
| माता तिष्ठति–माता अतिष्ठत् | मात्रा स्थीयते–मात्रा अस्थीयत। |

( कर्मणि विशेषाः )

चुर्–चोर्यते । तड्–ताड्यते । भूष्–भूष्यते । तुल्–तोल्यते । गण्–गण्यते । स्मृ–स्मर्यते । गै–गीयते । पा–पीयते । पॄ–पूर्यते । स्तॄ–स्तीर्यते । ज्ञा–ज्ञायते ।

---

# षट्त्रिंशः पाठः ।

## श्रीरामचरितम् ।

पुरा किल दशरथो नाम नृपतिरासीदयोध्यायाम् । तस्य चत्वारः पुत्रा अभवन्—रामो लक्ष्मणो भरतः शत्रुघ्नश्चेति । अतीव सुरूपाः सुशीलाश्च ते राजपुत्रा आनन्दयन् दशरथं स्वक्रीडाभिः । तेषां ज्येष्ठो रामचन्द्रस्तावत् सर्वेषां प्रियतमोऽभवत् । वेदविद्यायां धनुर्विद्यायां च प्रवीणः स प्रीणयति स्म गुरुदेवं वसिष्ठमुनिं सर्वांश्च नागरिकान् । तस्यैतानलौकिकान् गुणान् ज्ञात्वा ब्रह्मनिष्ठो वसिष्ठोऽचिन्तयत् । 'अहो गुणवान् खलु मे रामभद्रः । असंशयं भगवान् विष्णुरेवावतीर्णोऽयं खलानां नाशाय' इति ।

अथ कदाचिद् विश्वामित्रो नाम मुनिर्दशरथं द्रष्टुमागतः । राजा तं प्रत्युदगच्छत्समपूजयच्च । तेन प्रीतः स ऋषिरवदत् । 'धन्योऽसि दशरथ सुष्ठु शोभसेऽनेन विनयेन । अपि कुशलं तव कुमाराणाम्' इति । ततोऽञ्जलिं बद्ध्वा दशरथो न्यवेदयत् । 'कुशलं भोः सर्वेषां भवतामाशीर्वादेन । अत्रभवतामाज्ञापालने तत्परोऽयं सेवकः' इति । एतद्वचनं श्रुत्वा विश्वामित्रो यज्ञे राक्षसैः कृतानां विघ्नानामखिलं वृत्तान्तं तस्मै नृपतयेऽकथयत् । आज्ञापयच्च यज्ञस्य रक्षणाय रामं प्रेषयितुम् । वसिष्ठगुरोरनुज्ञया राजा दशरथो विश्वामित्रेण सह रामलक्ष्मणयोर्गमनमन्वमन्यत । स्वाश्रमं च प्रत्यागच्छत् स मुनिस्ताभ्यामनुगतः ।

ततो बहुभिर्ब्राह्मणैः सह पुनश्च विश्वामित्रो यज्ञमारभत । दिवा रात्रौ चाग्निकुण्डस्य समीपमुपविश्य वेदानपठन् पुरोहिता आहुतीश्चार्पयन् हुताशनाय । घृतमिश्रिता आहुतीर्भक्षयतोऽग्नेर्ज्वाला आकाशमुदगच्छन् । तत्कर्म दूषयितुमभ्यद्रवन् बहवो राक्षसाः । रामलक्ष्मणौ च तान् सुतीक्ष्णैर्बाणैर्न्यषूदयताम् । दिवा विश्रान्तिवेलायां भगवान् विश्वामित्रस्ताभ्यां राजपुत्राभ्यां विविधाः सरसाः कथा अकथयत् । अशिक्षयच्च कदाचिन्नूतनास्त्रप्रयोगान् । कस्मिंश्चिद् दिने यज्ञं नाशयितुमागता ताटका नाम राक्षसी । तां दृष्ट्वा रामोऽवदत् । "भगवन्, कथमेतां नारीमहं घातयेयम् । 'क्षत्रियेण न कापि नारी शस्त्रेण प्रहर्तव्या' इति धर्मानुशासनम्" इति । ततो विश्वामित्रो न्यवेदयत् । 'अतीव दुष्टा आततायिनी दारुणा चैषा राक्षसी । बहवो जना अनया हता उत्सादितश्चायं जनपदः । त्वामन्तरेण न कोऽप्येनां दण्डयितुं शक्तः । तस्मान्निःशङ्कमेनां निषूदय' इति । भवतां धर्मज्ञानां वचनं प्रमाणमित्युक्त्वा रामो निशितेन बाणेन ताटकायाः प्राणानपाहरत् ।

ताटकाया वधस्य वृत्तान्तमाकर्ण्य रामलक्ष्मणाभ्यां सह योद्धुमागतौ मारीचः सुबाहुश्च तस्याः पुत्रौ । महतीं गर्जनां तयोर्यदाश्रमस्था जना अशृण्वंस्तदा ते सर्वे भयाक्रान्ता अभवन् । सहसैव चापबाणानादायाश्रमान्निष्क्रान्तौ रामलक्ष्मणौ । ततो रामस्य शरैर्विद्धौ पराभूतौ सुबाहुमारीचौ । लक्ष्मणेन च भस्मसात्कृतं तयोः सैन्यमग्न्यस्त्रेण । तयो राजपुत्रयोरेतादृशमलौकिकं पराक्रमं दृष्ट्वा विस्मितास्ते वनवासिनो विश्वामित्रेण सह तौ समपूजयन् । अप्रतिमं खलु रामचन्द्रस्य धनुर्धारित्वम् । न कोऽपि वीरस्तस्य पुरतः समरे स्थातुं समर्थः । इत्येषा तस्य कीर्तिः सर्वासु दिशासु प्रासरत् ।

रामो राजमणिः सदा विजयते रामं रमेशं भजे
रामेणाभिहता निशाचरचमू रामाय तस्मै नमः ।

**रामान्नास्ति परायणं परतरं रामस्य दासोऽस्म्यहं**
**रामे चित्तलयः सदा भवतु मे भो राम मामुद्धर ॥ १ ॥**
**लोकाभिरामं रणरङ्गधीरं राजीवनेत्रं रघुवंशनाथम् ।**
**कारुण्यरूपं करुणाकरं तं श्रीरामचन्द्रं शरणं प्रपद्ये ॥ २ ॥**

---

धनुर्विद्या । अञ्जलिः । वृत्तान्तः । हुताशनः । अस्त्रप्रयोगः । धर्मानुशासनम् । निशाचरचमूः ।

**वाक्यपूरणम्**—( १ ) रामेण ताटिका मारिता = रामः ______ अमारयत् ।

( २ ) सुबाहुमारीचाभ्यां गर्जना ______ = सुबाहुमारीचौ ______ अकुरुताम् ।

( ३ ) आश्रमस्थैः ______ श्रुतः = आश्रमस्था घोषं ______ ।

( ४ ) ताटिकया ______ उत्सादितः = ताटिका जनपदं ______ ।

( ५ ) मारीचो योद्धुं ______ = मारीचो योद्धुं ______ ।

**साधिताः शब्दाः**—( १ ) युध्—योद्धा । युद्धम् । योद्धुम् । आयुधम् ।

( २ ) पूज्— ______ । ______ । ______ । ______ ।

( ३ ) श्रु— ______ । ______ । ______ । ______ ।

( ४ ) नी— ______ । ______ । ______ । ______ ।

( ५ ) लभ्— ______ । ______ । ______ । ______ ।

**शब्दप्रयोगाः**—रामम् अन्तरेण–रामेण विना–रामाद् ऋते–ताटिकां हन्तुं न कोऽपि क्षमः ।

आश्रमं परितः–सर्वतः–अभितः वा चरन्तौ रामलक्ष्मणौ स्तः । आश्रमं राक्षसीं च अन्तरा अतिष्ठतां रामलक्ष्मणौ । धिक् तान् राक्षसान् । दिष्ट्या विजयते रामचन्द्रः ।

---

# सप्तत्रिंशः पाठः ।

## श्रीकृष्णचरितम् ।

पुरा किल कंसो नाम कश्चिद्दुराचारो मथुराया नृपतिरासीत् । देवकी नाम तस्य भगिनी। तस्याः पुत्रस्त्वां हनिष्यतीति नारदेन उक्तः स कंसः कारागृहेऽस्थापयद् देवकीं तस्याः पतिं च वसुदेवम् । क्रमेण तयोः सप्तापत्यानि जातमात्राण्येव तेन हतानि । अत एव भृशं दुःखितौ तौ दम्पती महता कष्टेन कालमनयताम् । गच्छता कालेन तयोरष्टममपत्यं जातम् । स एव श्रीकृष्णः । श्रावणे मासे कृष्णपक्षेऽष्टम्यां तिथौ मध्यरात्रे तं देवकी प्रासूत। साक्षाद् भगवतो विष्णोरवतारभूतं नीलवर्णं तं तेजोरूपं बालकं दृष्ट्वा देवकी वसुदेवश्च भृशं प्रमुदितौ। कथमेष कुमारो रक्षणीय इत्यासीत् तयोर्महती चिन्ता। 'यद्भविष्यति तद्भवतु गोकुलमेनं नेष्यामि' इति निश्चित्य वसुदेवस्तं कुमारं वंशपात्रे निधाय बहिः प्रास्थितः। प्रभोरिच्छया कारागृहस्य द्वाराणि स्वयमेव विवृतानि द्वारपालाश्च निद्रिता अभवन्। निभृतमेव वसुदेवोऽगच्छत् गोकुलस्य मार्गेण प्राविशच्च जलं यमुनायाः पारं गन्तुम्। पर्जन्यकालस्तदासीद् तेनावहन् महान् जलौघो वेगेन। परं तस्य बालकस्य पादसंस्पर्शेन लघुरभवत् स महान् प्रवाहः। शेषश्च फणामकरोद् वंशपात्रस्योपरि। गोकुले नन्दस्य गृहं गत्वा वसुदेवस्तत्र तं कुमारं स्थापितवान्।

अनेन प्रकारेण रक्षितः श्रीकृष्णो गोकुलेऽवर्धत। तेन सहाक्रीडत् तस्य ज्यायान् भ्राता बलरामोऽन्ये च बहवो गोपसुताः। अहो प्रेमवती तेषां क्रीडा। श्रीकृष्णस्य लीलानुपमैवासीत्। समृद्धं तद्गोकुलं पुष्टास्तत्रस्था धेनवो धर्मरताश्च गोपजनाः। दुग्धं दधि नवनीतं च विपुलमासीत्तत्र। भगवान् श्रीकृष्णो बालमित्रैः सह तद्यथेष्टं

भक्षितवान्। गोपसुतैः सह स वासुदेवः प्रतिदिनं धेनूर्वत्सांश्च गृहीत्वा वनमगच्छत्। तत्र धेनवस्तृणमभक्षयन् बालकाश्चाक्रीडन् विविधैः प्रकारैः। मुरलीं गृहीत्वा मुहुर्मुहुर्वादयति स्म श्रीकृष्णः। अहो माधुर्यं तस्य वादनस्य। तस्य श्रवणेनामुह्यन् न केवलं गोपा गोप्यः किंतु धेनवो विहगाश्च। शतशः प्राणिनस्तं मुरलीरवं श्रोतुं आलेख्यगता इव निश्चला आसन्। अहो स्वर्गीयं तत्सुखं गोकुलवासिभिरास्वादितम्। एतमेव मुरलीधरं भक्तजना मनसा ध्यायन्ति। अलौकिकं च सुखमनुभवन्ति। विविधैः कविभिर्वर्णितमेतन्मुरलीवादनम्। धन्यास्ते भक्ता धन्याश्च ते कवयः।

मन्दारमूले मदनाभिरामं बिम्बाधरापूरितवेणुनादम्।
गोगोपगोपीजनमध्यसंस्थं कृष्णं भजे गोकुलपूर्णचन्द्रम्॥ १॥
विहाय पीयूषरसं मुनीश्वरा। महाङ्घ्रिराजीवरसं पिबन्ति किम्॥
इति स्वपादाम्बुजमालिहन्मुदा। स गोपबालः श्रियमातनोतु नः॥ २॥

---

दुराचारः। वंशपात्रम्। तेजोरूपः। मुरली। आलेख्यम्।

**वाक्यपूरणम्—**

| | |
|---|---|
| (१) कंसेन देवकी ——— स्थापिता | कंसः ——— कारागृहे ——— |
| (२) वसुदेवेन ——— गोकुलं नीतः | वसुदेवः ——— गोकुलं ——— |
| (३) श्रीकृष्णेन ——— कृता | श्रीकृष्णः ——— अकरोत् |
| (४) मुरलीनादेन ——— मोहिताः | मुरलीनादः ——— ——— |

**चित्रस्य वर्णनम्—**उपरिगतमालेख्यं वर्णयत।

**उपसर्गस्य धर्मः—**हृ—(१) हरति—नरो ग्राममजां हरति। (२) विहरति—कुमाराः क्रीडाङ्गणे विहरन्ति। (३) अपहरति—चोरो धनमपहरति। (४) आहरति—बालो मोदकमाहरति। (५) प्रहरति—भीमो राक्षसं प्रहरति। (६) संहरति—रामो राक्षसान् संहरति। (७) उद्धरति—शेषः फणामुद्धरति।

[ तथैव अन्येषां धातूनां परीक्षणं क्रियताम् । ]

**विशेषणानि**—१. घननीलः श्रीकृष्णो गोकुलेऽक्रीडत् ।

२. घननीलं श्रीकृष्णं ——— समपूजयन् ।

३. घननीलेन ——— मुरलीरवः कृतः ——— च मोहिताः ॥

४. ——— श्रीकृष्णाय राधा प्रत्यहं ——— प्रायच्छत् ।

५. ——— श्रीकृष्णात् अन्यो न कोऽपि ——— गोपजनानाम् ।

६. घननीलस्य ——— पराक्रमोऽलौकिक आसीत् ।

७. ——— श्रीकृष्णे अनुपमा भक्तिरासीद् ——— ।

८. हे घननील श्रीकृष्ण ——— मां भवदुःखात् ।

[ विशेष्यस्य यानि विभक्तिलिङ्गवचनानि तान्येव विभक्तिलिङ्गवचनानि विशेषणस्य ]

[ उपरिगते पाठे यानि विशेषणपदानि तानि दर्शयत ]

---

# सङ्कीर्ण-पद्यानि ।

## सूर्योदयः ।

दिनमणिरेष सखे । उदयगिरिम् आरूढोऽधुना ॥
रक्तैषा प्राची । उज्ज्वलिता च धरित्री
प्रवर्तिता सृष्टिरपि । आरूढोऽधुना ॥ १ ॥
तरुकोटरमपि ते । विहगाः सुखं त्यजन्ति
आरावाः श्रूयन्ते । आरूढोऽधुना ॥ २ ॥
कृषीवलाः क्षेत्रे । दुग्ध्वा गोरसमेते
बालेभ्यो यच्छन्ति । आरूढोऽधुना ॥ ३ ॥

---

## प्रभात-वर्णनम् ।

उदयति मिहिरो विदलिततिमिरो
भुवनं कथमभिरामम् ।
प्रचरति चतुरो मधुकरनिकरो
गुञ्जति कथमविरामम् ॥ १ ॥
विकसति कमलं विलसति सलिलं
पवनो वहति सलीलम् ।
दिशि दिशि धावति कूजति नृत्यति
खगकुलमतिशयलोलम् ॥ २ ॥
शिरसि तरूणां रविकिरणानां
खेलति रुचिररुणाभा ।
उपरि दलानां हिमकणिकानां
कापि हृदयहरशोभा ॥ ३ ॥
प्रसरति गगने नरपतिभवने
दुन्दुभिदमदमनादः ।
भज परमेशं पठ सनिवेशं
भवतादनुपममोदः ॥ ४ ॥

( पण्डिताः वि. भट्टाचार्याः )

---

## प्रश्नोत्तराणि ।

को धर्मो भूतदया किं सौख्यं नित्यमरोगिता जगति ।
कः स्नेहः सद्भावः किं पाण्डित्यं परिच्छेदः ॥ १ ॥
का शक्तिः खलदण्डे नियोजिता सत्यमेव पालयितुम् ।
का बुद्धिर्हितसिद्ध्यै नियोजिता वाथ रिपुदमने ॥ २ ॥
कोऽन्धः कुकर्मनिरतः को बधिरो यः शृणोति नान्योक्तिम् ।
को मूको यः काले प्रियाणि वक्तुं न जानाति ॥ ३ ॥

किं कुर्याद् रव्युदये श्रीशास्तवनं तथा च गुरुनमनम् ।
पश्चात् किं वा कार्यं व्यायामो दुग्धपानमभ्यासः ॥ ४ ॥
कुत्र विधेयो वासः सज्जनसविधे सदा सौम्ये ।
कः परिहार्यो देशः पिशुनजनैः सङ्कुलीभूतः ॥ ५ ॥
कुत्र विधेयो यत्नो विद्याभ्यासे परोपकारे च ।
अवधीरणा क कार्या परनिन्दायां परधनेषु ॥ ६ ॥

किं भूषणं रुचिरमत्र यशो न रत्नं
किं कार्यमार्यचरितं सुकृतं न दोषः ।
किं चक्षुरप्रतिहतं धिषणा न नेत्रं
किं तापहारि मधुरं वचनं न पाथः ॥ ७ ॥

---

## प्रदोष-वर्णनम् ।

प्रकाश्य सम्पदं क्षणं प्रपीडयञ्जगज्जनम् ।
सुदूरमस्तपर्वतं रविः प्रयाति साम्प्रतम् ॥ १ ॥
न तस्य सा प्रगल्भता न तादृशी प्रचण्डता ।
न शक्तिरस्ति वा तथा समस्तमेव हा वृथा ॥ २ ॥
शनैः शनैः प्रसर्पति रिपुस्तमो जगत् प्रति ।
कियच्चिरं नु सम्प्रति स्थितो भवेद् दिवापतिः ॥ ३ ॥
नृपः प्रयाति पश्चिमां दिशं विपत्पताकिताम् ।
गतिं मयूखसेवकान् विधिर्दिशत्यसाविमाम् ॥ ४ ॥
रवेर्मरीचिकिङ्करा द्रुमाग्रभागसञ्चराः ।
प्रभोर्हि मार्गणे परा अवापतन्ति चातुराः ॥ ५ ॥
रविश्च लोकजीवनं प्रणश्यतीति निश्चितम् ।
त्रिविष्टपं नु दुःखितं रुदन् करोति कूजनम् ॥ ६ ॥

जगत्पतेर्नु कन्दुकः पतत्यसौ विभावकः ।
समुन्नतां स्थितिं गतः पदान्तरं हि सर्वतः ॥ ७ ॥
हरेर्नु नेत्रमेकतो निमील्यते श्रमार्तितः ।
द्वितीयनेत्रमुल्लसत् भविष्यतीत्यथाचिरात् ॥ ८ ॥

---

## सुभाषितानां सङ्ग्रहः ।

विघ्नेशो वः स पायात् विहृतिषु जलधीन् पुष्कराग्रेण पीत्वा
यस्मिन्नुद्धृत्य तोयं वमति तदखिलं दृश्यते व्योम्नि देवैः ।
क्वाप्यम्भः क्वापि विष्णुः क्वचन कमलभूः क्वाप्यनन्तः क्वचिच्छ्रीः
क्वाप्यौर्वः क्वापि शैलाः क्वचन मणिगणाः क्वापि नक्रादिसत्त्वाः ॥

अद्यापि नोज्झति हरः किल कालकूटं
कूर्मो बिभर्ति धरणीं खलु पृष्ठभागे ।
अम्भोनिधिर्वहति दुस्तरवाडवाग्नि-
मङ्गीकृतं सुकृतिनः परिपालयन्ति ॥ १ ॥

आरोग्यं भास्करादिच्छेत् । श्रियमिच्छेद्धुताशनात् ।
ज्ञानं महेश्वरादिच्छेत् । मोक्षमिच्छेज्जनार्दनात् ॥ २ ॥

अलङ्कारप्रियो विष्णुर्जलधाराप्रियः शिवः ।
नमस्कारप्रियो भानुर्ब्राह्मणो भोजनप्रियः ॥ ३ ॥

स्वयं महेशः श्वशुरो नगेशः । सखा धनेशस्तनयो गणेशः ॥
तथापि भिक्षाटनमेव शम्भोः । बलीयसी केवलमीश्वरेच्छा ॥ ४ ॥

स्वयं पञ्चमुखः पुत्रौ गजाननषडाननौ ।
दिगम्बरः कथं जीवेदन्नपूर्णा न चेद् गृहे ॥ ५ ॥

विद्या ददाति विनयं विनयाद्याति पात्रताम् ।
पात्रत्वाद्धनमाप्नोति धनाद्धर्मं ततः सुखम् ॥ ६ ॥

तुष्टो हि राजा यदि सेवकेभ्यः । भाग्यात्परं नैव ददाति किंचित् ॥
अहर्निशं वर्षति वारिवाहः । तथापि पत्रत्रितयः पलाशः ॥ ७ ॥

सुलभाः पुरुषा राजन् सततं प्रियवादिनः ।
अप्रियस्य च पथ्यस्य वक्ता श्रोता च दुर्लभः ॥ ८ ॥

न स्वल्पमप्यध्यवसायभीरोः । करोति विज्ञानविधिर्गुणं हि ॥
अन्धस्य किं हस्ततलस्थितोऽपि । प्रकाशयत्यर्थमिह प्रदीपः ॥ ९ ॥

सर्वागमानामाचारः प्रथमं परिकल्पते ।
आचारः प्रथमो धर्मो नृणां श्रेयस्करो महान् ॥ १० ॥

विद्या नाम नरस्य रूपमधिकं प्रच्छन्नगुप्तं धनं
विद्या भोगकरी यशःसुखकरी विद्या गुरूणां गुरुः ।
विद्या बन्धुजनो विदेशगमने विद्या महादेवता
विद्या राजसु पूजिता न तु धनं विद्याविहीनः पशुः ॥ ११ ॥

अश्वस्य भूषणं वेगो मत्तं स्याद्गजभूषणम् ।
चातुर्यं भूषणं नार्या उद्योगो नरभूषणम् ॥ १२ ॥

उत्तमा आत्मना ख्याताः पित्रा ख्याताश्च मध्यमाः ।
मातुलेनाधमाः ख्याताः श्वशुरेणाधमाधमाः ॥ १३ ॥

एको देवः केशवो वा शिवो वा । एका माता पार्वती वा सती वा ॥
एकं मित्रं भूपतिर्वा यतिर्वा । एको वासः पत्तने वा वने वा ॥ १४ ॥

को हि भारः समर्थानां किं दूरं व्यवसायिनाम् ।
को विदेशः सविद्यानां कः परः प्रियवादिनाम् ॥ १५ ॥

क्षणशः कणशश्चैव विद्यामर्थं च साधयेत् ।
क्षणत्यागे कुतो विद्या कणत्यागे कुतो धनम् ॥ १६ ॥

देवताराधनैः शास्त्रैः कालो गच्छति धीमताम् ।
मूर्खाणां तु दिवा रात्रौ द्यूतने कलहेन वा ॥ १७ ॥

काव्यसेवाविनोदेन कालो गच्छति धीमताम् ।
व्यसनेन तु मूर्खाणां निद्रया कलहेन वा ॥ १८ ॥

व्यसनानि सन्ति बहुशो व्यसनद्वयमेव केवलं व्यसनम् ।
विद्याभ्यसनं व्यसनं यद्वा हरिपादसेवनं व्यसनम् ॥ १९ ॥

पुष्पेषु चम्पा नगरीषु लङ्का नदीषु गङ्गा नृवरेषु रामः ।
रामासु रम्भा पुरुषेषु विष्णुः काव्येषु माघः कविकालिदासः ॥ २० ॥

विजेतव्या लङ्का चरणतरणीयो जलनिधि-
र्विपक्षः पौलस्त्यो रणभुवि सहायाश्च कपयः ।
तथाप्येको रामः सकलमजयद्राक्षसकुलं
क्रियासिद्धिः सत्त्वे भवति महतां नोपकरणे ॥ २१ ॥

रथस्यैकं चक्रं भुजगयमिताः सप्ततुरगा
निरालम्बो मार्गश्चरणविकलः सारथिरपि ।
रविर्यात्येवान्तं प्रतिदिनमपारस्य नभसः
क्रियासिद्धिः सत्त्वे भवति महतां नोपकरणे ॥ २२ ॥

मात्रा समं नास्ति शरीरपोषणं । विद्यासमं नास्ति शरीरभूषणम् ॥
पूजासमं नास्ति शरीरतोषणं । चिन्तासमं नास्ति शरीरशोषणम् ॥२३॥

भारतं पञ्चमो वेदः सुपुत्रः सप्तमो रसः ।
दाता पञ्चदशं रत्नं जामाता दशमो ग्रहः ॥ २४ ॥

तावन्महतां महती यावत्किमपि हि न याच्यते लोकम् ।
बलिमनुयाचनसमये श्रीपतिरपि वामनो जातः ॥ २५ ॥

आसाद्यापि महोदधिं न वितृषो जातो जलैर्वाडवो
मेघं प्राप्य न चातकोऽपि चरणौ भानुं न लेभेऽरुणः ।
चन्द्रः शङ्करशेखरेऽपि निवसन् पक्षक्षये क्षीयते
प्रायः सज्जनसंगमेऽपि लभते दैवानुरूपं फलम् ॥ २६ ॥

कृपणेन समो दाता न भूतो न भविष्यति ।
अस्पृशन्नेव वित्तानि यः परेभ्यः प्रयच्छति ॥ २७ ॥

घृष्टं घृष्टं पुनरपि पुनश्चन्दनं चारुगन्धं
छिन्नं छिन्नं पुनरपि पुनः स्वादु चैवेक्षुदण्डम् ।

दग्धं दग्धं पुनरपि पुनः काञ्चनं कान्तवर्णं
न प्राणान्ते प्रकृति-विकृतिर्जायते ह्युत्तमानाम् ॥ २८ ॥

यत्रास्ति लक्ष्मीर्विनयो न तत्र। अभ्यागतो यत्र न तत्र लक्ष्मीः।
उभौ च तौ यत्र दरिद्रता च। नैकत्र सर्वो गुणसंनिपातः ॥ २९ ॥

मूलं भुजङ्गैः शिखरं विहङ्गैः शाखा प्लवङ्गैः कुसुमानि भृङ्गैः।
आश्चर्यमेतत् खलु चन्दनस्य परोपकाराय सतां विभूतयः ॥ ३० ॥

अयममृतनिधानं नायकोऽप्यौषधीना-
ममृतमयशरीरः कान्तियुक्तोऽपि चन्द्रः।
भवति विगतरश्मिर्मण्डलं प्राप्य भानोः
परसदननिविष्टः को लघुत्वं न याति ॥ ३१ ॥

श्रुतिर्विभिन्ना स्मृतिरेव भिन्ना नैको मुनिर्यस्य वचः प्रमाणम्।
धर्मस्य तत्त्वं निहितं गुहायां महाजनो येन गतः स मार्गः ॥ ३२ ॥

वयमिह परितुष्टा वल्कलैस्त्वं दुकूलैः
सम इह परितुष्टौ निर्विशेषो विशेषः।
स तु भवति दरिद्रो यस्य तृष्णा विशाला
मनसि च परितुष्टे कोऽर्थवान् को दरिद्रः ॥ ३३ ॥

पादपानां भयं वातः पद्मानां शिशिरो भयम्।
पर्वतानां भयं वज्रः साधूनां दुर्जनो भयम् ॥ ३४ ॥

रे रे चातक सावधानमनसा मित्र क्षणं श्रूयता-
मम्भोदा बहवो वसन्ति गगने सर्वेऽपि नैतादृशाः।
केचिद् वृष्टिभिरार्द्रयन्ति धरणीं गर्जन्ति केचिद् वृथा
यं यं पश्यसि तस्य तस्य पुरतो मा ब्रूहि दीनं वचः ॥ ३५ ॥

जयोऽस्तु पाण्डुपुत्राणां येषां पक्षे जनार्दनः।
यतः कृष्णस्ततो धर्मो यतो धर्मस्ततो जयः ॥ ३६ ॥

निन्दन्तु नीतिनिपुणा यदि वा स्तुवन्तु
लक्ष्मीः स्थिरा भवतु गच्छतु वा यथेष्टम्।

अद्यैव वा मरणमस्तु युगान्तरे वा
न्याय्यात्पथः प्रविचलन्ति पदं न धीराः ॥ ३७ ॥

मन्त्रे तीर्थे द्विजे देवे दैवज्ञे भेषजे गुरौ ।
यादृशीं भावनां कुर्यात् सिद्धिर्भवति तादृशी ॥ ३८ ॥

करारविन्देन पदारविन्दं । मुखारविन्दे विनिवेशयन्तम् ॥
वटस्य पत्रस्य पुटे शयानं । बालं मुकुन्दं मनसा स्मरामि ॥ ३९ ॥

दृष्टिपूतं न्यसेत् पादं वस्त्रपूतं पिबेज्जलम् ।
शास्त्रपूतं वदेद्वाक्यं मनःपूतं समाचरेत् ॥ ४० ॥

किं वाससैवं न विचारणीयं । वासः प्रधानं खलु योग्यतायाः ॥
पीताम्बरं वीक्ष्य ददौ तनूजां । दिगम्बरं वीक्ष्य विषं समुद्रः ॥ ४१ ॥

विद्वत्वं च नृपत्वं च नैव तुल्यं कदाचन ।
स्वदेशे पूज्यते राजा विद्वान् सर्वत्र पूज्यते ॥ ४२ ॥

नखिनां च नदीनां च शृङ्गिणां शस्त्रपाणिनाम् ।
विश्वासो नैव कर्तव्यः स्त्रीषु राजकुलेषु च ॥ ४३ ॥

शैले शैले न माणिक्यं मौक्तिकं न गजे गजे ।
साधवो न हि सर्वत्र चन्दनं न वने वने ॥ ४४ ॥

यस्यास्ति वित्तं स नरः कुलीनः स पण्डितः स श्रुतिमान् गुणज्ञः ।
स एव वक्ता स च दर्शनीयः सर्वे गुणाः काञ्चनमाश्रयन्ते ॥ ४५ ॥

तक्षकस्य विषं दन्ते मक्षिकायाश्च मस्तके ।
वृश्चिकस्य विषं पुच्छे सर्वाङ्गे दुर्जनस्य तद् ॥ ४६ ॥

चतुरः सखि मे भर्ता यल्लिखति स तत् परो न वाचयति ।
तस्मादप्यधिको मे स्वयमपि लिखितं स्वयं न वाचयति ॥ ४७ ॥

विद्या विवादाय धनं मदाय । शक्तिः परेषां परिपीडनाय ॥
खलस्य, साधोर्विपरीतमेतत् । ज्ञानाय दानाय च रक्षणाय ॥ ४८ ॥

कलारत्नं गीतं श्रवणपुटरत्नं हरिकथा
निशारत्नं चन्द्रः किल सदनरत्नं शिशुवरः ।

सभारत्नं विद्वान् गगनतलरत्नं दिनमणि-
र्महीरत्नं श्रीमान् जयति रघुनाथो गुणनिधिः ॥ ४९ ॥

जवो हि सप्तेः परमं विभूषणं । त्रपाङ्गनायाः कृशता तपस्विनः ॥
द्विजस्य विद्या नृपतेरपि क्षमा । पराक्रमः शस्त्रबलोपजीविनाम् ॥५०॥

---

# व्याकरणपाठाः

## [ अथ* सुबन्तप्रकरणम् । ]

### नामानि—( अजन्तानि स्वरान्तानि वा )

### 'अ'कारान्तः पुँल्लिङ्गो 'राम'–शब्दः ।

| | एकवचनम् | द्विवचनम् | वहुवचनम् |
|---|---|---|---|
| प्रथमा | रामः | रामौ | रामाः |
| द्वितीया | रामम् | रामौ | रामान् |
| तृतीया | रामेण | रामाभ्याम् | रामैः |
| चतुर्थी | रामाय | रामाभ्याम् | रामेभ्यः |
| पंचमी | रामात् | रामाभ्याम् | रामेभ्यः |
| षष्ठी | रामस्य | रामयोः | रामाणाम् |
| सप्तमी | रामे | रामयोः | रामेषु |
| संबोधनम् | हे राम | हे रामौ | हे रामाः (१) |

( एवमेव ब्राह्मणः–जनकः–आचार्यः–सूर्यः–सिंहः–हस्तः–इत्यादयः )

* [ सुबन्तानि–सुप् नाम विभक्तिः येषामन्ते तानि ]

---

### 'अ'कारान्तो नपुंसकलिङ्गो 'वन'–शब्दः ।

| | | | |
|---|---|---|---|
| प्रथमा | वनम् | वने | वनानि |
| द्वितीया | वनम् | वने | वनानि (२) |

---

( १ ) विभक्ति–प्रत्ययाः–पुंसि.

| | | | |
|---|---|---|---|
| स् | औ | अस् | ( प्र. ) |
| अम् | औ | आन् | ( द्वि. ) |
| इन | भ्याम् | ऐस् | ( तृ. ) |

( २ ) नपुंसके—

| | | |
|---|---|---|
| म् | ई | आनि |
| म् | ई | आनि |

| | | | |
|---|---|---|---|
| तृतीया | वनेन | वनाभ्याम् | वनैः |
| चतुर्थी | वनाय | वनाभ्याम् | वनेभ्यः |
| पंचमी | वनात् | वनाभ्याम् | वनेभ्यः |
| षष्ठी | वनस्य | वनयोः | वनानाम् |
| सप्तमी | वने | वनयोः | वनेषु |
| संबोधनम् | हे वन | हे वने | हे वनानि |

[ एवमेव फलं–अरण्यं–नगरं–मुखं–तृणं अस्त्रं–सुवर्णं–मित्रं–इत्यादयः ]

---

## 'इ'कारान्तः पुँल्लिङ्गो 'मुनि'–शब्दः । ( १ )

## 'इ'कारान्तो नपुंसकलिङ्गो 'वारि'–शब्दः । ( २ )

| | | |
|---|---|---|
| मुनिः | मुनी | मुनयः |
| मुनिम् | मुनी | मुनीन् |
| मुनिना | मुनिभ्याम् | मुनिभिः |
| मुनये | मुनिभ्याम् | मुनिभ्यः |
| मुनेः | मुनिभ्याम् | मुनिभ्यः |

| | | | |
|---|---|---|---|
| प्र. | वारि | वारिणी | वारीणि |
| द्वि. | वारि | वारिणी | वारीणि |
| तृ. | वारिणा | वारिभ्याम् | वारिभिः |
| च. | वारिणे | वारिभ्याम् | वारिभ्यः |
| पं. | वारिणः | वारिभ्याम् | वारिभ्यः |

---

| | | | |
|---|---|---|---|
| य | भ्याम् | भ्यस् | ( च. ) |
| आत् | भ्याम् | भ्यस् | ( पं. ) |
| स्य | ओस् | नाम् | ( ष. ) |
| इ | ओस् | सु | ( स. ) |
| – | औ | अस् | ( सं. ) |

( इतरे पुँल्लिङ्गवत् )

[ राम + इन = रामेण. Before ओस् & सु the अ in राम is changed to ए and before नाम् it is lengthened. ]

( १ ) विभक्ति–प्रत्ययाः–पुंसि.

| | | | |
|---|---|---|---|
| स् | — | अस् | ( प्र. ) |
| म् | — | न् | ( द्वि. ) |
| ना | भ्याम् | भिस् | ( तृ. ) |
| ए | भ्याम् | भ्यस् | ( च. ) |

( २ ) नपुंसके—

| | | |
|---|---|---|
| — | ई | इ |
| — | ई | इ |
| आ | भ्याम् | भिस् |

( पं ) ( ष. ) पुँल्लिङ्गवत्.

| | | | | | | |
|---|---|---|---|---|---|---|
| मुनेः | मुन्योः | मुनीनाम् | ष. | वारिणः | वारिणोः | वारीणाम् |
| मुनौ | मुन्योः | मुनिषु | स. | वारिणि | वारिणोः | वारिषु |
| हे मुने | हे मुनी | हे मुनयः | सं. | हे वारि-वारे | हे वारिणी | हे वारीणि |

[ एवमेव—हरिः—कपिः—अतिथिः ]   [ एवमेव—सुरभि—शुचि—इत्यादयः ]

---

## 'उ'कारान्तः पुँल्लिंगो 'गुरु'—शब्दः । ( १ )    'उ'कारान्तो नपुंसकलिङ्गो 'मधु'—शब्दः ।

| | | | | | | |
|---|---|---|---|---|---|---|
| गुरुः | गुरू | गुरवः | प्र. | मधु | मधुनी | मधूनि |
| गुरुम् | गुरू | गुरून् | द्वि. | मधु | मधुनी | मधूनि |
| गुरुणा | गुरुभ्याम् | गुरुभिः | तृ. | मधुना | मधुभ्याम् | मधुभिः |
| गुरवे | गुरुभ्याम् | गुरुभ्यः | च. | मधुने | मधुभ्याम् | मधुभ्यः |
| गुरोः | गुरुभ्याम् | गुरुभ्यः | पं. | मधुनः | मधुभ्याम् | मधुभ्यः |
| गुरोः | गुर्वोः | गुरूणाम् | ष. | मधुनः | मधुनोः | मधूनाम् |
| गुरौ | गुर्वोः | गुरुषु | स. | मधुनि | मधुनोः | मधुषु |
| हे गुरो | हे गुरू | हे गुरवः | सं. | हे मधु-मधो | हे मधुनी | हे मधूनि |

[ एवमेव भानुः—साधुः—वायुः ]   [ एवमेव वस्तु—अश्रु—वसु—इत्यादयः ]

---

## 'ऋ'कारान्तः पुँल्लिङ्गो 'नेतृ'—शब्दः ।    पितृ ।

| | | | | | | |
|---|---|---|---|---|---|---|
| नेता | नेतारौ | नेतारः | प्र. | पिता | पितरौ | पितरः |
| नेतारम् | नेतारौ | नेतॄन् | द्वि. | पितरम् | पितरौ | पितॄन् |

---

| | | | | | | |
|---|---|---|---|---|---|---|
| अस् | भ्याम् | भ्यस् | (पं.) | [ न् is added to the word | | |
| अस् | ओस् | नाम् | (ष.) | before vowel terminations ] | | |
| औ | ओस् | सु | (स.) | इ | ओस् | सु |
| — | — | अस् | (सं.) | — | ई | इ |

[ हरि+ए = हरे+ए = हरये ]   [ वारि+अस् = वारि+न्+अस् = वारिणः ]

( १ ) ( अत्र इकारान्तस्य नाम्नः प्रत्ययाः )

| | | | | |
|---|---|---|---|---|
| नेत्रा | नेतृभ्याम् | नेतृभिः | तृ. | |
| नेत्रे | नेतृभ्याम् | नेतृभ्यः | च. | ( अन्यानि रूपाणि 'नेतृ'–शब्दस्य |
| नेतुः | नेतृभ्याम् | नेतृभ्यः | पं. | रूपवत् भवन्ति ) |
| नेतुः | नेत्रोः | नेतृणाम् | ष. | [ एवमेव भ्रातृ–जामातृ–देवृ–नृ– |
| नेतरि | नेत्रोः | नेतृषु | स. | सव्येष्टृ–इत्यादयः ] |
| हे नेतर् | हे नेतारौ | हे नेतारः | सं. | हे पितर् हे पितरौ हे पितरः |

[ एवमेव कर्तृ-दातृ-भर्तृ-धातृ-रक्षितृ-नप्तृ-इत्यादयः ]

---

**'ऋ'कारान्तो नपुंसकलिङ्गः 'कर्तृ'–शब्दः ।**

**'आ'कारान्तः स्त्रीलिङ्गो 'माला'–शब्दः । (१)**

| | | | | | | |
|---|---|---|---|---|---|---|
| कर्तृ | कर्तृणी | कर्तॄणि | प्र. | माला | माले | मालाः |
| कर्तृ | कर्तृणी | कर्तॄणि | द्वि. | मालाम् | माले | मालाः |
| कर्तृणा | कर्तृभ्याम् | कर्तृभिः | तृ. | मालया | मालाभ्याम् | मालाभिः |
| कर्तृणे | कर्तृभ्याम् | कर्तृभ्यः | च. | मालायै | मालाभ्याम् | मालाभ्यः |
| कर्तृणः | कर्तृभ्याम् | कर्तृभ्यः | पं. | मालायाः | मालाभ्याम् | मालाभ्यः |
| कर्तृणः | कर्तृणोः | कर्तॄणाम् | ष. | मालायाः | मालयोः | मालानाम् |
| कर्तृणि | कर्तृणोः | कर्तृषु | स. | मालायां | मालयोः | मालासु |
| हे कर्तृ-कर्तर् | हे कर्तृणी | हे कर्तॄणि | सं. | हे माले | हे माले | हे मालाः |

[ एवमेव दातृ–गन्तृ–द्रष्टृ–इत्यादयः ]  [ एवमेव कन्या–शाला–क्रीडा–देवता ]

---

**'इ'कारान्तः स्त्रीलिङ्गो 'भूमि'–शब्दः ।**

**'ई'कारान्तः स्त्रीलिङ्गो 'नदी'–शब्दः । (२)**

| | | | | | | |
|---|---|---|---|---|---|---|
| भूमिः | भूमी | भूमयः | प्र. | नदी | नद्यौ | नद्यः |
| भूमिम् | भूमी | भूमीः | द्वि. | नदीम् | नद्यौ | नदीः |

---

(१) विभक्तिप्रत्ययाः—  (२) विभक्तिप्रत्ययाः—

— ई अस् (प्र.) — औ अस्

| | | | | | | |
|---|---|---|---|---|---|---|
| भूम्या | भूमिभ्याम् | भूमिभिः | तृ. | नद्या | नदीभ्याम् | नदीभिः |
| भूमये-भूम्यै | भूमिभ्याम् | भूमिभ्यः | च. | नद्यै | नदीभ्याम् | नदीभ्यः |
| भूमेः-भूम्याः | भूमिभ्याम् | भूमिभ्यः | पं. | नद्याः | नदीभ्याम् | नदीभ्यः |
| भूमेः-भूम्याः | भूम्योः | भूमीनाम् | ष. | नद्याः | नद्योः | नदीनाम् |
| भूमौ-भूम्याम् | भूम्योः | भूमिषु | स. | नद्याम् | नद्योः | नदीषु |
| हे भूमे | हे भूमी | हे भूमयः | सं. | हे नदि | हे नद्यौ | हे नद्यः |

[ अनेन विधिना मतिः–भक्तिः–सृष्टिः ] [अनेनैव विधिना जननी–वापी–मही ]

---

'उ'कारान्तः स्त्रीलिङ्गो 'धेनु'–शब्दः ।

'ऊ'कारान्तः स्त्रीलिङ्गो 'वधू'–शब्दः ।

| | | | | | | |
|---|---|---|---|---|---|---|
| धेनुः | धेनू | धेनवः | प्र. | वधूः | वध्वौ | वध्वः |
| धेनुम् | धेनू | धेनूः | द्वि. | वधूम् | वध्वौ | वधूः |
| धेन्वा | धेनुभ्याम् | धेनुभिः | तृ. | वध्वा | वधूभ्याम् | वधूभिः |
| धेनवे–धेन्वै | धेनुभ्याम् | धेनुभ्यः | च. | वध्वै | वधूभ्याम् | वधूभ्यः |
| धेनोः–धेन्वाः | धेनुभ्याम् | धेनुभ्यः | पं. | वध्वाः | वधूभ्याम् | वधूभ्यः |
| धेनोः-धेन्वाः | धेन्वोः | धेनूनाम् | ष. | वध्वाः | वध्वोः | वधूनाम् |

---

| | | | | | | |
|---|---|---|---|---|---|---|
| आम् | ई | अस् | ( द्वि. ) | म् | औ | अस् |
| आ | भ्याम् | भिस् | ( तृ. ) | आ | भ्याम् | भिस् |
| ए | भ्याम् | भ्यस् | ( च. ) | ए | भ्याम् | भ्यस् |
| अस् | भ्याम् | भ्यस् | ( पं. ) | अस् | भ्याम् | भ्यस् |
| अस् | ओस् | नाम् | ( ष. ) | अस् | ओस् | नाम् |
| आम् | ओस् | सु | ( स. ) | आम् | ओस् | सु |
| — | ई | अस् | ( सं. ) | — | औ | अस् |

[ नदी + ए = नदी + आ + ए = नद्यै ]  [ माला + या + ए = मालायै ]

| | | | | | | |
|---|---|---|---|---|---|---|
| धेनौ–धेन्वाम् | धेन्वोः | धेनुषु | स. | वध्वाम् | वध्वोः | वधूषु |
| हे धेनो | हे धेनू | हे धेनवः | सं. | हे वधु | हे वध्वौ | हे वध्वः |

[ अनेनैव विधिना तनुः–रज्जुः ] [ अनेनैव विधिना श्वश्रूः–चमूः–इत्यादयः ]

---

## 'ऋ'कारांतः स्त्रीलिङ्गो 'मातृ'–शब्दः ।

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| प्र. | माता | मातरौ | मातरः | पं. | मातुः | मातृभ्याम् | मातृभ्यः |
| द्वि. | मातरम् | मातरौ | मातॄः | ष. | मातुः | मात्रोः | मातॄणाम् |
| तृ. | मात्रा | मातृभ्याम् | मातृभिः | स. | मातरि | मात्रोः | मातृषु |
| च. | मात्रे | मातृभ्याम् | मातृभ्यः | सं. | हे मातर् | हे मातरौ | हे मातरः |

[ एवमेव दुहितृ–ननान्दृ–यातृ–इत्यादयः शब्दाः ]

| | | | |
|---|---|---|---|
| [ स्वसृ ( भगिनी ) | स्वसा | स्वसारौ | स्वसारः |
| | स्वसारम् | स्वसारौ | स्वसॄः |
| ( मातृवत् ) | — — | — — | — — |
| | हे स्वसर् | हे स्वसारौ | हे स्वसारः ] |

---

## केचित् अपवादाः ।

### ( पुँलिङ्गाः शब्दाः )

पतिः । सखिः ।

| | | | | | | |
|---|---|---|---|---|---|---|
| पतिः | पती | पतयः | प्र. | सखा | सखायौ | सखायः |
| पतिम् | पती | पतीन् | द्वि. | सखायम् | सखायौ | सखीन् |
| पत्या | पतिभ्याम् | पतिभिः | तृ. | सख्या | सखिभ्याम् | सखिभिः |
| पत्ये | पतिभ्याम् | पतिभ्यः | च. | सख्ये | सखिभ्याम् | सखिभ्यः |
| पत्युः | पतिभ्याम् | पतिभ्यः | पं. | सख्युः | सखिभ्याम् | सखिभ्यः |
| पत्युः | पत्योः | पतीनाम् | ष. | सख्युः | सख्योः | सखीनाम् |
| पत्यौ | पत्योः | पतिषु | स. | सख्यौ | सख्योः | सखिषु |
| हे पते | हे पती | हे पतयः | सं. | हे सखे | हे सखायौ | हे सखायः |

स्त्री । ( स्त्रीलिङ्गाः शब्दाः )–श्रीः–( धीः–ह्रीः )

| | | | | | | |
|---|---|---|---|---|---|---|
| स्त्री | स्त्रियौ | स्त्रियः | प्र. | श्रीः | श्रियौ | श्रियः |
| स्त्रीं-स्त्रियं | स्त्रियौ | स्त्रीः-स्त्रियः | द्वि. | श्रियम् | श्रियौ | श्रियः |
| स्त्रिया | स्त्रीभ्याम् | स्त्रीभिः | तृ. | श्रिया | श्रीभ्याम् | श्रीभिः |
| स्त्रियै | स्त्रीभ्याम् | स्त्रीभ्यः | च. | श्रियै-श्रिये | श्रीभ्याम् | श्रीभ्यः |
| स्त्रियाः | स्त्रीभ्याम् | स्त्रीभ्यः | पं. | श्रियः-श्रियाः | श्रीभ्याम् | श्रीभ्यः |
| स्त्रियाः | स्त्रियोः | स्त्रीणाम् | ष. | श्रियः-श्रियाः | श्रियोः | श्रियां-श्रीणाम् |
| स्त्रियाम् | स्त्रियोः | स्त्रीषु | स. | श्रियां-श्रियि | श्रियोः | श्रीषु |
| हे स्त्रि | हे स्त्रियौ | हे स्त्रियः | सं. | हे श्रीः | हे श्रियौ | हे श्रियः |

[ लक्ष्मी–तरी–इत्यादीनां प्रथमाया एकवचनं–लक्ष्मीः–तरीः । अन्यानि रूपाणि नदीवत् । ]

---

नपुंसकलिङ्गाः शब्दाः — अथ सर्वनामानि

दधि–सक्थि–अस्थि–अक्षि । — अस्मद् ।

| | | | | | | |
|---|---|---|---|---|---|---|
| दधि | दधिनी | दधीनि | प्र. | अहम् | आवाम् | वयम् |
| दधि | दधिनी | दधीनि | द्वि. | माम्-मा | आवाम्-नौ | अस्मान्-नः |
| दध्ना | दधिभ्याम् | दधिभिः | तृ. | मया | आवाभ्याम् | अस्माभिः |
| दध्ने | दधिभ्याम् | दधिभ्यः | च. | मह्यं-मे | आवाभ्यां-नौ | अस्मभ्यम्-नः |
| दध्नः | दधिभ्याम् | दधिभ्यः | पं. | मत् | आवाभ्याम् | अस्मत् |
| दध्नः | दध्नोः | दध्नाम् | ष. | मम-मे | आवयोः-नौ | अस्माकम्-नः |
| दध्नि-दधनि | दध्नोः | दधिषु | स. | मयि | आवयोः | अस्मासु |
| दधे-दधि | दधिनी | दधीनि | सं. | | | |

युष्मद् ।

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| प्र. | त्वम् | यूवाम् | यूयम् | तृ. | त्वया | युवाभ्या | युष्माभिः |
| द्वि. | त्वाम्-त्वा | युवां-वां | युष्मान्-वः | च. | तुभ्यं-ते | युवाभ्यां-वां | युष्मभ्यं-वः |

| | | | | | | |
|---|---|---|---|---|---|---|
| पं. | त्वत् | युवाभ्यां | युष्मत् | स. त्वयि | युवयोः | युष्मासु |
| ष. | तव-ते | युवयोः-वां | युष्माकं-वः | | | |

---

पुँल्लिङ्गः शब्दः ।—[ सर्व ]— स्त्रीलिङ्गः शब्दः ।

| | | | | | | |
|---|---|---|---|---|---|---|
| सर्वः | सर्वौ | सर्वे | प्र. | सर्वा | सर्वे | सर्वाः |
| सर्वम् | सर्वौ | सर्वान् | द्वि. | सर्वाम् | सर्वे | सर्वाः |
| सर्वेण | सर्वाभ्याम् | सर्वैः | तृ. | सर्वया | सर्वाभ्याम् | सर्वाभिः |
| सर्वस्मै | सर्वाभ्याम् | सर्वेभ्यः | च. | सर्वस्यै | सर्वाभ्याम् | सर्वाभ्यः |
| सर्वस्मात् | सर्वाभ्याम् | सर्वेभ्यः | पं. | सर्वस्याः | सर्वाभ्याम् | सर्वाभ्यः |
| सर्वस्य | सर्वयोः | सर्वेषाम् | ष. | सर्वस्याः | सर्वयोः | सर्वासाम् |
| सर्वस्मिन् | सर्वयोः | सर्वेषु | स. | सर्वस्याम् | सर्वयोः | सर्वासु |

( नपुं. ) प्र. सर्वम् सर्वे सर्वाणि
द्वि. सर्वम् सर्वे सर्वाणि } अन्यानि रूपाणि पुँल्लिङ्गवत् ।

---

यद्—( पुँल्लिङ्गम् )—किम्

| | | | | | | |
|---|---|---|---|---|---|---|
| यः | यौ | ये | प्र. | कः | कौ | के |
| यम् | यौ | यान् | द्वि. | कम् | कौ | कान् |
| येन | याभ्याम् | यैः | तृ. | केन | काभ्याम् | कैः |
| यस्मै | याभ्याम् | येभ्यः | च. | कस्मै | काभ्याम् | केभ्यः |
| यस्मात् | याभ्याम् | येभ्यः | पं. | कस्मात् | काभ्याम् | केभ्यः |
| यस्य | ययोः | येषाम् | ष. | कस्य | कयोः | केषाम् |
| यस्मिन् | ययोः | येषु | स. | कस्मिन् | कयोः | केषु |

( स्त्रीलिङ्गम् )

| | | | | | | |
|---|---|---|---|---|---|---|
| या | ये | याः | प्र. | का | के | काः |
| याम् | ये | याः | द्वि. | काम् | के | काः |
| यया | याभ्याम् | याभिः | तृ. | कया | काभ्याम् | काभिः |

